अथलघुसंग्रहःप्रारभ्यते

ल॰ सं॰ श्रीगणेशाय नमः॥ भवानींगणनाथंच नत्वा ब्रह्मादिदेवताः॥ बालानांच सुबोधाय कुर्वे होडगुसंग्रहम्॥१॥ अथ नक्षत्रना
१ मानि॥१॥ अश्विनी। भरणी। कृत्तिका। रोहिणी। मृगशिरा। आर्द्रा। पुनर्वसु। पुष्य। श्लेषा। मघा। पूर्वा। उत्तरा। हस्त। चित्रा। स्वाती। वि
शाखा। अनुराधा। ज्येष्ठा। मूल। पूर्वाषाढा। उत्तराषाढा। अभिजित। श्रवण। धनिष्ठा। शतभिषा। पूर्वाभाद्रपदा। उत्तराभाद्रपदा। रेव
ती॥ इति नक्षत्रनामानि॰॥ चुचेचोला अश्विनी॥ लिलुलेलो भरणी। अइउए कृत्तिका। ओवावीवू रोहिणी। वेवोकाकी मृगशि
रा। कुघङछ आर्द्रा। केकोहहि पुनर्वसु। हुहेहोडा पुष्य। डिडुडेडो श्लेषा। ममिमुमे मघा। मोटाटिटु पूर्वाफाल्गुनी। टेटोपपि उ
त्तराफाल्गुनी। पुषणठ हस्त। पेपोररि चित्रा। रुरेरोता स्वाती। तितुतेतो विशाखा। ननिनुने अनुराधा। नोयायियु ज्येष्ठा। ये
योभभि मूल। भुधाफाढा पूर्वाषाढ। भेभोजजि उत्तराषाढा। जुजेजोखा अभिजित्। खिखुखेखो श्रवण। गगिगुगे धनिष्ठा। गोसासि
सुसेसोदा शतभिषा। देदोदादि पूर्वाभाद्रपद। दुथझञ उत्तराभाद्रपद। देदोचचि रेवती॥ ॥ अश्विनी भरणी कृत्तिकाः पादमेकं
मेषः॥१॥ कृत्तिकापादत्रयं रोहिणी मृगशिरार्द्धं वृषः॥२॥ मृगशिरार्द्धं आर्द्रा पुनर्वसुपादत्रयं मिथुन॥३॥ पुनर्वसुपादमे
कं पुष्य श्लेषान्तं कर्कः॥४॥ मघा च पूर्वाफाल्गुनी उत्तराः पादमेकं सिंहः॥५॥ उत्तरापादत्रयं हस्त चित्रार्द्धं कन्या॥६॥ चित्रार्द्धं
स्वाती विशाखापादत्रयं तुला॥७॥ विशाखापादमेकं अनुराधा ज्येष्ठान्तं वृश्चिकः॥८॥ मूलं च पूर्वाषाढ उत्तराषाढ पाद
धनुः॥९॥ उत्तराषाढपादत्रयं श्रवण धनिष्ठार्द्धं मकरः॥१०॥ धनिष्ठार्द्धं शतभिषा पूर्वाभाद्रपादत्रयं कुंभः॥११॥ पूर्वाभा
द्रपादमेकं उत्तराभाद्रपद रेवत्यंते च मीनः॥१२॥ इति होडाचक्रम्॥ अथ योगनामानि॥ विष्कंभ। प्रीति। आयुष्मान।

तमी

ग्य। शोभन। अतिगंड। सुकर्मा। धृति। मूल। गण्ड। वृद्धि। ध्रुव। व्याघात। हर्षण। वज्र। सिद्धि। व्यतिपात। वरियान्। परिघ। शि
वा। सिद्धि। साध्य। शुभ। शुक्ल। ब्रह्म। ऐन्द्र। वैधृतिः॥ इति योगनामानि॥ द्वितीया धनमीनेषु चतुर्थी वृषकुम्भयोः। मेषकर्क विष्टेः
षष्ठी कन्यामिथुनचाष्टमी॥१॥ दशमी वृश्चिके सिंहे द्वादशी मकरे तुले। एतास्वतिथयो दग्धाः शुभे कर्मणि वर्जिताः॥२॥ नं
न्दा भद्रा जया रिक्ताः पूर्णाश्च तिथयः क्रमात्॥ वारत्रयं समावर्त्य तिथयः प्रतिपन्मुखाः॥३॥ नन्दाङ्गारे सिते भद्रा सोमे चैव
जया तथा॥ गुरौ रिक्ता शनौ पूर्णा कालयोगाः प्रकीर्तिताः॥४॥ द्वादशी रविणा युक्ता सोमे चैकादशी तथा॥ दशमी भौमवारेण
नवमी बुधसंयुता॥५॥ अष्टमी गुरुणा योगे सप्तमी भृगुसंयुता॥ षष्ठी शनैश्चरे वापि योगाश्चैते च निन्दिताः॥६॥ श्रीपतिः।
त्यज रविमनुराधा वैश्वदेवं च सोमे शतभिषमपि भौमे चन्द्रपुत्रेश्विनी च॥७॥ शशिधरमपि जीवे सार्प्यदेवं च शुक्रे रविसु
तमपि हस्ते मृत्युयोगा भवंति॥८॥ मघार्कवारे शशिनि द्विदैवं आर्द्रा कुजे सौमसुते च मूलं। गुरौ धनिष्ठा भृगु रोहिणी च श
नौ च हस्तो यमघंटयोगः॥९॥ वर्जयेत्सर्वकार्येषु हस्तार्के पंचमीतिथौ॥ भौमाश्विनी च सप्तम्यां षष्ठ्यां चन्द्रैन्द्रवं तथा॥१०॥
बुधानुराधामष्टम्यां दशम्यां भृगुरेवतीम्॥ नवम्यां गुरुपुष्यं चैकादश्यां शनिरोहिणीं॥११॥ गृहप्रवेशे यात्रायां विवाहे च यथ
क्रमम्॥ भौमेश्विनीं शनौ ब्राह्म्यं गुरौ पुष्यं विवर्जयेत्॥१२॥ कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः॥ हूणवङ्गखशेष्वेव
र्ज्यास्त्रितयजास्तथा॥१३॥ मृत्युः क्रकचदग्धादीन् निन्द्यो शस्ते शुभान् जगुः॥ केचिद्यामोत्तरं चान्ये यात्रायामेव निन्दिताः॥१४॥ ग्री
न्यान्तरे॥ वैधृतिं च व्यतीपातं परिघार्द्धं तथैव च॥ व्याघाते नव नाड्यस्तु वर्ज्याः सकलकर्मसु॥१५॥ विष्कंभे घटिकास्तिस्रः प्र

लेपंचप्रकीर्तिताः॥ वर्ज्जेचनवनाड्यश्चषट्चंगंडांतिगण्डयोः॥१६॥ अथार्द्धयामः। रवौवर्ज्यंचतुर्थंचसोमेसप्तद्वयंत
॥कुजेषष्ठद्वयंचैवबुधेपंचतृतीयकम्॥१७॥गुरौसप्ताष्टकंचैवशुक्रेवेदतृतीयकम्॥शनावाद्यन्तषष्ठंचवारवेलाति
न्दिताः॥१८॥ इत्यर्द्धयामः॥ वारादितोगतघटीद्विघ्नापंचहृताप्तकम्॥ लब्धसैकंदिनाधीशाद्र्केशुक्रस्ततचन्द्रसाः॥१९
रिजीवकुजाश्चैवकालहोराधिपाःस्मृताः॥ कालहोरासुतत्कार्य्यंयस्मोक्तंचासरेस्वके॥२०॥ वर्षांतेवर्जयेत्पक्षमासांतेच
नत्रयम्॥ घटिकाद्वयमस्तान्तेग्रहणाद्दिनसप्तकम्॥२१॥ विपाशैरावतीतीरेशतद्र्वाश्चत्रिपुष्करे॥ वर्ज्जयेत्सर्वकार्येषुहो
काप्राग्दिनाष्टकम्॥२२॥ अथगण्डान्तः॥ तत्रवसिष्ठः। अश्विनीमघमूलादौगुण्डोगण्डद्वयंतथा॥ रेवतीसर्पशक्रांतेगंडो
ण्डद्वयंमतः॥२३॥ ग्रन्थान्तरे। अश्विनीमघमूलादौत्रि ३ वेद ४ नव ९ नाडिकाः। रेवतीसर्पशक्रान्तेमास १२ रुद्र ११ रस
स्तथा २४ मूलादौवेदघटिकासुजायतेयदिमानवः समाष्टकंपितातस्यमुखंनैवविलोकयेत्॥२५॥ सर्वेषांगण्डजातानांपरि
त्यागोविधीयते॥ तातेनादर्शनंकार्य्यंयावत्षण्मासिकोभवेत्॥ अथवाविधानतःशांतिःकर्त्तव्याशुभमिच्छता॥ विवाहादि
शुभेनेष्टोयात्रायांविघ्नकारकः॥२७॥ अथशांतिविधिःसंक्षेपः। शतौषधीमूलमृदम्बुरत्नैस्त्वद्वीजगर्भैःकलशैःसमन्त्रैः। कु
र्यांज्जनित्रपितृबालकानांस्नानंशुभार्थीसहहोमदानैः॥२८॥ शतौषधीमूलचूर्णअलाभेसर्वौषधीमूलंतदलाभेतुल
ग्राह्यम्॥ मुरामांसीवचाकुष्टंसैलेयरजनीद्वयम्॥ शुंठीचंपकमुस्ताचसर्वौषधिगणःस्मृतः॥२९॥ सप्तमृत्तिकागजस्थ
यस्थानात् चतुष्पथात् वल्मीकस्थानात् नदीसंगमात् गोशालात् राजद्वारात्॥३०॥ अपरमन्यत्रतः अवगम्यशान्ति

धेयम्। ग्रन्थविस्तरभयान्न लिखितम्। यतो वासनाग्रन्थविस्तारो दुस्तरः॥ अथ विष्टिः॥ कृष्णे तृतीया दशमी च रात्रौं सप्तमी
भूतदिवा च भद्रा। एकादशी नक्तमतश्चतुर्थी शुक्लाष्टमी पूर्णदिवा च भद्रा॥ ३१॥ अथ भद्रामुखम्॥ दशम्यामष्टम्यां वसुघ
टिकाभ्यः पंचकमथो हरिद्युः सप्तम्यां तिथिमितनाड्यर्द्धं शरमितम्। तृतीयाराकायां त्रियमघटिकाभ्यः शरमितं मुखं विष्टेः
प्रोक्तं शिवतिथिचतुर्थ्यादौ न शुभदं॥ ३२॥ अथ भद्रापुच्छम्। भेष्वर्कनखनाड्यूर्द्धं भद्रापुच्छं घटित्रयम्॥ क्रमेणैव सिते
पक्षे उत्क्रमेणासितेतरे॥ ३३॥ अथ भद्रावासः॥ कुंभमीनालिसिंहस्थे विष्टेर्वासो महीतले॥ मेषादित्रितयं कर्के स्वर्गलोके मही
यते॥ ३४॥ कन्यातुलामृगेचापेषु पाताले यत्र तत्फलम्॥ इति संक्षेपतस्त्याज्यप्रकरणम्॥ अथ कश्चिच्छुभयोग उच्यते। त
त्र रामः। सूर्येऽर्कमूलोत्तरपुष्यदास्रं चंद्रे श्रुतिब्राह्मशशीज्यमैत्रं। भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पं ज्ञे ब्राह्ममैत्रार्ककृशानु
चांद्रम्॥ ३५॥ जीवेंत्यमैत्राश्वदितीज्यधिष्ण्यं शुक्रेऽन्त्यमैत्राश्वदितिश्रवोभम्। शनौ श्रुतिब्राह्मसमीरभानि सर्वार्थसिद्ध्यै कथिता
नि पूर्वैः॥ ३६॥ सूर्ये भाद्दे ४ गो ९ तर्क ६ दिग् १० विश्व १३ नख २० संमिते। चन्द्रर्क्षैर्वियोगाः स्युर्दीर्घसंघविनाशकाः॥ ३७॥ श्री
पतिः। नन्दा शुक्रे सोमपुत्रे च भद्रा रिक्ता मन्दे लोहितांगे जयाच॥ वाचांपत्यौ या च पूर्णाभिधाना सर्वारंभेष्वेव सिद्धा तिथिः स्यात
॥ ३८॥ रामः। अयोगे सुयोगोऽपि चेत्स्यात्तदानीमयोगं निहत्यैष सिद्धिं तनोति। परे लग्नशुद्ध्या कुयोगादिनाशं दिनार्द्धोत्तरं
विष्टिपूर्वं च शस्तम्॥ ३९॥ विष्टिरंगारकश्चैव व्यतीपातं स वैधृतिं। प्रत्यरिर्जन्मनक्षत्रं मध्यान्हात्परतः शुभम्॥ ४०॥ इति शु
भयोगः॥ अथ संक्रांतिगोचरप्रकरणम्। पूर्वतोऽपि परतोऽपि संक्रमात्पुण्यकालघटिका च षोडश॥ अर्द्धरात्रिसमयादनंतर

ल॰सं॰
३

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| कृष्णा॰ | ३ | ७ | १० | १४ | ४ | ११ | ८ | १५ | |
| एतत् घटि ऊर्द्ध्वम् एत त्घटिमितं | २३ | १५ | ८ | १ | १ | १५ | ८ | २३ | एतदूर्ध्वम् |
| भद्रामुखम् | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | एतत् घटि |
| एतत् घटि ऊर्द्ध्वम्॰ए | २० | १२ | ५ | २७ | २७ | ५ | १२ | २० | परिमितंभ |
| तत् मितंभ द्रापुच्छम्॰ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | द्रापुच्छम्॰ |

रसंक्रमं परदिने हि पुण्यदम्॥४१॥ कार्मुकं च परित्यज्य म
करे याति दिवाकरः॥ प्रदोषे चार्द्धरात्रे वा तदा पुण्यं परे ऽह
नि॥४२॥ यद्यर्द्धरात्रिरेवं स्यात्सं पूर्णो संक्रमो रवेः॥ तदा
दिनद्वयं पुण्यं स्नानदानादिकर्मसु॥४३॥ रवेः॥ इंद्१ क२त
की६ अष्टाष्टौ ८८ नाड्यो का९ खन्नृपाः १६० क्रमात्। वर्ज्या
संक्रमणे ऽर्कादेः प्रायो ऽर्कस्पाति निन्दिताः॥४४॥ संक्रांतिध
रनसन्नाद्गुणसेज्ञवन्नि षट्६ त्रि३ षट्६॥ पंथाभोगोव्ययावस्त्रं
हानिश्च विपुलं धनम्॥४५ अथ द्वितीयः॥ यस्मिन्भे भाति च
न्द्रः करकलिततनिर्यो ऽदृश्यमानः प्रदोषे देयं तन्मध्यसंगे फलमिह कथितं जन्मनक्षत्रयोगात्॥ त्रासं वित्तस्य लाभं भयम
पि कथितं भूपसन्मानता च स्थानत्यागं च लाभं भगणिगणकस्य संख्या वदिन्दोर्द्वितीया॥४६॥ अथ ग्रहाणां गोचरफलम्॥ त
न्त्रीपतिः। सर्वे लाभ ११ गृहस्थितास्त्रि ३ ख१० रिपुष्वर्कः कुजार्कीन्त्रि ३ षट्६ प्राप्तो ऽस्या ३ द्य१ ख१० मन्मथा ७ रिपु६ शशि
ख१० स्ता ७ रि६ वर्जे ऽसुरगुरुः। धी५ धर्म्मा९ स्त७ धने२ गुरु वाक्पतिररिः६ ख२ सा८ सु४ ख१० स्थो बुधः श्रेष्ठो जन्मग्रहादिगो राम॰
चरविधौ विद्वान चेत्स्यात् ग्रहैः॥४७॥ धेनुः शंखो ऽरुणरुचिवृषो कांचनं पीतवस्त्रं श्वेतस्त्वाश्वः सुरभिरसिता कृष्णलोहं ३

महाजः। सूर्य्यादीनां मुनिभिरुदिता दक्षिणास्तु ग्रहाणाम् स्नाने दाने हवन बलिभिस्तत्र तुष्यंति खेटाः॥४८॥ अपरं ग्रहंव
र्णापेक्षया दानं देयं॥ सूर्यभौमप्रीतये आरक्तवस्तूनि देयानि। बुधगुरुप्रीतये पीतवस्त्रं देयं। चन्द्रशुक्रप्रीतये श्वेतव
स्तूनि देयानि। शनिराहुकेतुप्रीतये कृष्णवस्तूनि देयानि॥ अथ स्नानविधिः॥ लाजाकुष्ठबलाप्रियंगुकघनासिद्धार्थैः निशाद
रुभिः। पुंखालोध्रयुतैर्जलैर्निगदितं स्नानं ग्रहोत्थाघहृत्॥४९॥ अथ ताराबलम्॥ जन्मभाद्गणयेद्दशो दिनाधिष्ण्यावधिक्र
मात्॥ नवभिस्तु हरेद्भागं शेषं तारा प्रकीर्तिताः॥ जन्मसंपद्विपत्क्षेमप्रत्यरिः साधको वधः। मैत्रं वा चातिमैत्रं च तारानामसदृक्
फलम्॥५०॥ कृष्णे बलवती तारा शुक्ले चन्द्रस्तु वीर्यवान्॥ सर्वेषु शुभकार्येषु यात्रादौ चिन्तयेत्सुधीः॥५१॥ इति ताराबल
म्॥ अथ पातदोषः॥ सूर्यभुक्ताच्च नक्षत्राद्देषु पातो विधीयते। आश्लेषा च ९ मघा १० चित्रा १४ सानुराधा १७ तथैव च॥५२
॥श्रवणं रेवती चैव गणयेद्दृग्भिरादिताः॥ पातसंज्ञे च नक्षत्रे विवाहादि शुभं त्यजेत्॥५३॥ अथ मुहूर्त्तः॥ तत्र श्रीपतिः। रौ
द्राहिमित्रपितरो वसवाम्बुविश्वे वेधा विधिः शतमखः पुरुहूतवह्निः। नक्तंचराश्च वरुणार्यमयोनयश्च प्रोक्ता दिने दश च
पंच तथा मुहूर्त्ताः॥५४॥ निशामुहूर्त्ता गिरिशाजपादाऽहिर्बुध्न्यपूषाश्वियमाग्नयश्च॥ विधातृचंद्रादितिजीवविष्णुतिग्मद्यु
तित्वाष्ट्रसमीरणाश्च॥५५॥ अर्य्यम्णार्के तुहिनकिरणे राक्षसब्राह्मसंज्ञौ पित्र्याग्नेयौ क्षितिसुतदिने चंद्रपुत्रेऽभिजिच्च॥ पित्र्यब्रा
ह्म्यौ भृगुसुतदिने सार्पपैरक्षश्च जीवे भौजंगेशौ सविततनये वर्जनीयौ मुहूर्त्तौ॥५६॥ अभिजिन्मुहूर्त्ते दक्षिणदिग्गमनं वर्ज्य
म्॥ मुहूर्त्ते सर्वस्मिन् दिक्शूलादि विन्यसेत्॥५७॥ मन्देन्दुनात्मजे सूर्ये गुरुवारं च दक्षिणे॥ पश्चिमे भृगुभानुभ्यामुत्तरे बुधभौ

ल॰सं॰ मयोः १८ आग्नेय्यां सोमगुरौ नैर्ऋत्यां रविभार्गवौ॥ वायव्यां मंगलं चैव ऐशान्यां बुधमंदयोः॥५९॥ इ॰ का॰ यो॰ इति संक्रांति
४ गोचरताराबलोपग्रहमुहूर्तप्रकरणम्। अथ नक्षत्रदेवताः॥ अश्वो १ यमो २ नलो ३ ब्रह्मा ४ चन्द्रो ५ रुद्रो ६ दिति ७ र्गुरुः ८
सर्पः ९ पिता १० भगश्चैव ११ अर्य्यमा च १२ दिवाकरः १३ त्वष्टा १४ वायुः १५ कृशान्विंद्रो १६ मित्रश्चैव १७ पुरन्दरः १८ नि
र्ऋतिः १९ सलिलश्चैव २० विश्वेदेवो २१ जनार्दनः २२ वसवो २३ वारुणश्चैव २४ तथैवस्यादजैकपाद् २५ अहिर्बुध्न्यः २६
तथा पूषा २७ क्रमान्नक्षत्रदेवताः॥६०॥ अथ कृष्यारम्भः। दैवज्ञचिन्तामणौ। रेवत्यश्विकरत्रयेमृगमघामूलानुराधोत्तरा
ज्येष्ठादास्रवरोहिणीषु हरिभे पुष्ये विशाखासु च॥ आदित्ये शतभे च सौम्यदिवसे ह्यङ्के वृषे वृश्चिके बीजानां वपनं हलप्रवह
णं छेदादिकं शोभनम्॥६१॥ दशम्येकादशी चैव तृतीया च त्रयोदशी॥ सप्तमी पंचमी चैव प्रतिपच्च सुखावहाः॥६२॥ रिक्ताष्ट
मीविष्टिषु नष्टचन्द्रे क्षीणेन्दुसूर्यार्कजभौमघस्रे॥ निरंशके वा निशि संध्ययोर्वा कृता कृषिः पूर्वधनानि हन्ति॥६३॥ भाद्रत्रये
शिरः प्राच्यां याम्यां मार्गत्रये शिरः। फाल्गुनत्रितये पश्चाच्छिरो ज्येष्ठत्रयोत्तरे॥६४॥ ऊर्द्धभागत्रयं त्यक्त्वा अधोभागद्वयं तथा
॥ मध्ये नाभिं विजानीयादिति प्राह पराशरः॥६५॥ यत्र नाभिस्तत्र हलबीजोप्तिः कर्त्तव्या॥ रामरामाग्नि पंचाग्नि पंचाब्धि च शु
भाशुभम्। अर्काभिजिच्च नक्षत्राल्लांगलं चक्रमीरितम्॥६६॥ इति हलचक्रम्॥ अथ बीजोप्तिः॥ राहुभाद्दशकं यावत् द्वादशं
षोडशं तथा॥ विंशान्मिते तथा चान्त्ये वेदसंख्यास्तु जेहुधः॥६७॥ इति बीजोप्तिचक्रम्॥ सोमसौम्यगुरुशुक्रवासरास्सर्वक राम॰
र्मसु भवंति सिद्धिदाः॥ भानुभौमशनिवासरेषु च प्रोक्तमेव खलु कर्म सिद्ध्यति॥६८॥ अथ वस्त्रपरिधानं नवान्नं च॰॥ रेवत्यां ४

करपंचकाश्विवसुभे वस्त्रं बुधादिन्ने येपुंसां पुष्यपुनर्वसूत्तरयुतारोहिण्यपिश्रेयसी॥ एतेष्वेव नवान्नमन्नं च मृगो
विष्णोष्ण्यभं शस्यते चन्द्रार्कौ वपि मीनगौ युवतिभिः सार्द्धं तथा मन्मथः॥ ६९॥ हस्ताश्विपुष्यमृगवासवरोहिणीषु चि
त्रोत्तरानिर्ऋतिमित्रविशाखभेषु॥ पूषास्फपारदविधिः शुभदो नराणां वारेषु चन्द्रबुधभार्गववाक्पतीनाम्॥ ७०॥ ध्रुंगे
स्थिरे लग्ने चापि शुभैः केन्द्रत्रिकोणगैः। पापैस्त्रिषट्दशायस्थैः वृक्षायारोपणं हितम्॥ अथ नृपदर्शनं। चित्रोत्तरा वै
ष्णवधातपूषापुष्याश्विनिष्ठाश्विमृगानुराधा। शुभाश्च तारातिथिवारयोगा महीपतीनां मिलने प्रदिष्टाः॥ ७१॥ अथ मद्यारम्भः
॥ मघावरुणपूर्वास्कमूलार्द्राभरणीषु च। पौरहूते च सार्प्ये च समयारम्भः शुभावहः॥ ७२॥ अथ पशूनां क्रयविक्रयः। अश्वानहू
ये चादितिभहूये च वस्कहूये पौष्णयुगे च सौम्ये॥ शाक्रे च मूले पितृभे शुभेऽन्हि कुर्यात् पशूनां क्रयणं गमं च॥ ७३॥ क्रयर्क्षे
विक्रयो नेष्टो विक्रयर्क्षे क्रयोऽपि न॥ पौष्णास्तु वाश्विनी वातश्चवश्चित्राक्रये शुभाः॥ ७४॥ अथ विपणिः॥ कुंभराशिमपहाय स
धुषु द्रव्य२ कर्म१० अव११ मूर्ति१ वर्तिषु। व्यये१२षु स्फमदापि पूद्रमे भार्गवे विपणिरिंदुसंयुते॥ ७५॥ अथ गजाश्वदोलादि
कर्माणि। तत्र यशोधरः। हस्तत्रये रेत्सरिपुत्रये च पूषाश्विजीवादितिचन्द्रभेषु। ज्ञशुक्रचन्द्रार्कबृहस्पतीनां दोलेभवाजी
न्द्रविधिः प्रशस्तः॥ ७६॥ रिक्तावर्जिततिथिषु॥ अथ शस्त्रधारणम्॥ दैवज्ञचिंतामणौ। हस्तस्वातिचतुष्टयेऽदितियुगे वि
त्रोत्तरापूषभे रोहिण्यां गुरुभार्गवार्कदिवसे योगे तिथौ शोभने। लग्ने गोघटसिंहरंध्रभवने शुद्धे विधौ शोभने सन्नाहादि सम
स्तशस्त्राणि च यारान्नाहिता धारिताः॥ ७७॥ अथ वापीकूपतडागादिखननम्॥ तत्ररामः। मित्रार्कध्रुववासवाम्बुपमघातोया

ल॰ सं॰ ५ पुष्येन्दुभिः पापैर्हीनबलैस्तनौ सुरगुरौ गेवा भृगौ स्वे विधौ॥ आप्ये सर्वजलाशयस्य खननं ब्र्भे भौमपै सेन्दुभैः सौरेत्यंहिबुध्ने
शुभैस्तनुगृहे जे ज्ञे नराशौ शुभम्॥७८॥ ग्रन्थांतरे॰ मघोत्तनात् पंचनगांकसूर्य्ये नवेन्दुषड्विंशमितेषु भेषु। एतेन हीने च वर्गे
हं विधेयम् तडागवापीखननं न शस्तम्॥७९॥ अथ सेवाकर्म ग्रंथांतरे। रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि। सेवयेत्स्वामिनं
भृत्यः शुभवारोदये तिथौ॥८०॥ स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत्॥ वसुभिश्च हरेद्भागं योधिकः स ऋणी भवेत्।८१॥
अ८ क५ च६ ट४ त७ प१ य३ श२ वर्गाः खगेशमार्ज्जारसिंहश्वनकानां। सर्पाखुमृगावीनां निजपंचमवैरिणामष्टौ॥८२॥ अ
थ नौकाघट्टनं चालनम्। दैवज्ञचिंतामणौ। त्रिषूत्तरासु रोहिण्यां मृगे पुष्ये करे वसौ॥ मैत्राहिवारुणे पैत्र्ये पोतकर्मापि भे स्मृताः
॥८३॥ शुक्रगुरौ भौमवारेषु॥ अथ वीराभिचारौ॥ मूलार्द्राभरणीपैत्र्ये मृगसौम्ये घटे तनौ। क्रूरे च शुक्रे॰ छमे शुद्धे सिद्धिर्वीराभिचा
रयोः॥८४॥ अथ रोगविमुक्तस्नानम्। ग्रामं नृपा मथमं कं योज्य स्ववर्गांकं एकीकृत्य हरेत्। गजैरिततनोस्यात्तो दशांको भवेत्भू
यः स्वामीसमांक एव शुभदोस्याज्योन्य दुःखप्रदः॥८५॥ तत्र यशोधरः। पूर्वासु जीवशिववन्हिहरित्रयेषु मूलाश्विवार्द्रकिदि
दैवतमित्रभेषु। वारे च भूमितनयार्कजवाक्पतीनां स्नानं शुभं भवति रोगविमुक्तकानाम्॥८५॥ अन्यच्च॰ लग्ने चरे सूर्य्यकु
जे च वारे रिक्ता तिथौ चन्द्रबले न हीने। केन्द्रत्रिकोणेषु भवंति पापैः स्नानं हितं रोगविमुक्तकानाम्॥८६॥ अथ कोशसंग्रहः। त
त्रन्दसिंहः। रौद्रश्रवणपुष्येन्दुमैत्रवासववारुणम्। त्रीण्युत्तराणि हस्तश्च कोशसंग्रहणे शुभाः॥८७॥ अथ आरामजलाशयसुर रामः
प्रतिष्ठा॰ जलाशयारामसुरप्रतिष्ठा सौम्यायने जीवशशांकशुक्रे। दृश्ये मृदुक्षिप्रचरे ध्रुवे स्यात्पक्षे सिते स्वर्क्षतिथिक्षणे ५

वा॥ ८८॥ रिक्तारवर्जे दिवसेति शस्ता शशांकपापैः त्रिभवक्रसंस्थैः। व्यष्टांत्यगैः सत्तवचरैर्मृगेन्द्रे सूर्य्ये घटे को युवतौ च विष्णुः
॥ ८९॥ शिवो नृयुग्मे द्वितनौ च देव्याः क्षुद्राश्चरे सर्वइमे स्थिरर्क्षे। पुष्ये ग्रहा विघ्नपसर्प्पयक्षभूतादयोन्त्ये श्रवणे जिनश्च॥
९०॥ अथ नवपर्णफलाद्यशनं॥ चण्डेश्वरः॥ मूलाश्विमैत्रकरतिष्यहरीन्द्रभेषु पौष्णोत्तरेत्यथ पुनर्वसुवासवेषु। वारेषु भू
मितनयार्कजवर्जितेषु तांबूलनूतनफलाद्यशनं हिताय॥ ९१॥ अथ द्रव्यप्रयोगः॥ तत्र रामः॥ स्वात्यादितिमृदुद्विदैवगुरु
भेकर्णत्रये श्वेच्चरे लग्ने धर्मसुताष्टशुद्धिसहिते द्रव्य प्रयोगः शुभः। नारेग्राह्यमृणं तु संक्रमदिने वृद्धौ करेऽर्केन्हि यत्तद्वंशेषु
भवेद्दृणं न च बुधे देयं कदाचिद्धनम्॥ ९२॥ अथ स्वर्णादिधारणम्॥ रेवत्यां वासवे दास्रे तथा हस्तादिपंचके॥ नारीणां बुधपु
शुक्रार्केगुरौ स्वर्णादिधारणम्॥ ९३॥ अथ भैषज्यकर्माणि॥ हस्ताश्विपूषगुरुवासवमूलमैत्रचित्रादितीन्दुहरिवारुणवायु
भेषु। वारेषु सूर्य्यबुधभार्गववाक्पतीनां भैषज्यभक्षणविधिः शुभदो नराणां॥ ९४॥ अथ सूचीकर्म। वासवादितिभत्वाष्ट्रमैत्रमि
न्त्रवमाश्विनी। सूचीकर्म तनुत्राणमेभिर्ऋक्षैः प्रशस्यते॥ ९५॥ श्रीपतिः। वासवोत्तरदलादिपंचके याम्यदिग्गमनगेहगोपन
म्। प्रेतदाहतृणकाष्ठसंग्रहः शय्यकावितननं च वर्जयेत्॥ ९६॥ अथ नक्षत्रताराज्ञानमाह। तत्र रामः। त्रि ३ त्र्यं ३ ग ६ पंचा
५ ग्नि ३ कु १ वेद ४ वन्हयः ३ शरे ५ षु ५ नेत्रा २ श्वि २ शरे ५ न्दु १ भू १ कृता ४। वेदा ४ ग्नि ३ रुद्रा ११ श्वि २ यमा २ ग्नि ३ वन्हयो ३ ब्ध्य
यः शतं १०० द्वि २ द्वि २ रदा ३२ भतारकाः॥ ९७॥ अश्वादिरूपं तुरगास्ययोनिं क्षुरेण एणास्यसमापिर्गृहं च॥ एषत्कचक्रे भवनं च मं
शय्याकरौ मौक्तिकविद्रुमं च॥ ९८॥ तोरणमणिनिभं च कुण्डलं सिंहपुच्छगजदंतमंचकाः॥ अग्निचत्रिचरणाभमर्द्दलो द

संचकृ यमाभमर्ईलाः॥९९॥ अथरात्रिघटिकाज्ञानमाह॥ तरणेर्व्योममध्यस्थं नक्षत्रं चनगोमितं॥ नखघ्नं नवभिर्भक्तं रात्रौ
चगतनाडिकाः॥१००॥ अथदिवसघटिकाज्ञानमाह॥ पादच्छायार — सोपेताशशिनेत्रेन्दुकाभजेत्॥ लब्धांकेघटिकाज्ञेयं
शेषंफलमिहोच्यते॥१०१॥ अथप्रसंगेनदिनप्रमाणानयनम्॥ अयनादिवसाद्दलितावसु८ पंच५करा२युता। द्शाप्ताघटि
काज्ञेयाशेषंफलमिहोच्यते॥१०२॥ अन्यच्च॥ अयनादिकवासररामहतागगनानलवाणशशांकयुता। परिभाजितव्योमर

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३ | ४ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ४ | ३ |
| ४१ | १३ | ४ | ४३ | ४५ | ३५ | ३५ | ४५ | ४३ | ४ | १३ | ४१ |

सैर्घटिकाभकरादिदिवाकरकादिनिशा॥१०३॥ इतिनक्षत्रप्रकरणम्॥ अथ
मेषादीनांदण्डपलानि॥ रामः ३ कब्धिमितामेषेचाब्धयस्त्रिदलं वृषे। यमेपं
चाब्धयश्चैवपंचद्व्यब्धिमितास्तथा॥१०४॥ कर्केचसिंहेबाणाश्चपंचाब्धयइ
तीरिताः। पंचरंड्राश्चकन्यायांबाणरामपलानिच। उत्क्रमेणतुलादौस्याद्राशि
मानंप्रयोजयेत्॥१०५॥ श्रीर्जयतु॥ अथसमयशुद्धिः। तत्रवत्सरः। वक्रेचैवातिचारेत्रिदशपतिगुरौदैत्यपूज्येचलुप्तेगुर्वादि
त्ये ऽधिमासेदिवसंकरविधौसंक्रमेचैत्रपौषे। विष्यांकेतूदयेवायदिक्रूरगुरौसिंहसंस्थेमघेज्येवर्षेलुप्तेचवोढुःसुनियतमर
णंदेवकन्यांवरस्य॥१०६॥ अन्यच्च॥ नीचस्थःसिंहगोवायदिभवतिगुरुःसूर्यराशौचलीनः॥ संप्रक्तोवायदास्यादृशयातष्ट 
णिनांक्षीणरूपोथवालः॥१०७॥ यात्रागेहंविवाहंकृतिरमरविधिर्यज्ञचूडादिसर्वेवापीचोद्यानकूपंनभवतिशुभदंपद्यदिष्ट
चलोके॥१०८॥ अतिचारगतेजीवेतंराशिंनैवचेत्पुनः॥ लुप्तसंवत्सरोज्ञेयःकुंभाजोसहग्रषैर्विना॥१०९॥ सिंहेगुरौगतेकार्यैः

नविवाहः कदाचन॥ मेषस्थोऽपि दिवा नाद्ये सिंहस्थोऽपि शुभप्रदः॥११०॥ नर्मदा पूर्वभागे तु शोणस्योत्तरदक्षिणे॥ गण्डक्याः
पश्चिमे भागे मकरस्थो न दोषभाक्॥१११॥ मृगराशिगते जीवे दिनषष्टिं परित्यजेत्॥ गर्गादिमुनयः सर्वे जगदुः सर्वकर्मसु
॥११२॥ वक्रे चैवातिचारे च अष्टाविंशतिवासरान्॥ वर्जयेत्सर्वकार्येषु केचिदाहुर्महर्षयः॥११३॥ अथ गुरुशुक्रयोर्वृद्धबाल्य
त्वमाह॥ वृद्धबाल्यं दशाहं च तथा सप्तदिनं परेः॥ केश्चित्पंच५दिनं प्रोक्तं त्र्यहं प्रोक्तं तु कर्हिचित्॥११५॥ श्रीपतिः। जन्मस्तु
सिन च जन्मभे तिथौ नैव जन्मदिवसेऽपि कारयेत्॥ आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न च कार्यमंगलम्॥११६॥ द्वौ ज्येष्ठौ
मध्यमौ प्रोक्तौ एकज्येष्ठः शुभप्रदः॥ ज्येष्ठत्रयं न कुर्वीत विवाहः सर्वसम्मतः॥११७॥ अत्र रामः॥ चूडाव्रतं चापि विवाहतो व्रता
चूडा च नेष्टा पुरुषत्रयांतरे। वधूप्रवेशाच्च सुतविनिर्गमः षण्मासतस्त्वाब्दविभेदतः शुभः॥११८॥ एकदिने मंगलदोषमाह॥
भ्रातृयुगे स्वसृयुगे कन्याभ्रातृयुगे तथा॥ न कुर्यान्मंगलं किंचिदेकस्मिन्मंडपेऽहनि॥११९॥ गर्भिणी यस्य वै माता मासादूर्ध्वं तु पं
चमात्॥ तस्य चूडोपनयने गर्भिण्यां वा शिशोर्मृतिः॥१२०॥ वध्वा वरस्यापि कुले त्रिपूरुषे नाशं व्रजेत्कश्चन निश्चयोत्तरम्॥ मा
सोत्तरं तत्र विवाह इष्यते शांत्याथवा सूतकनिर्गमे परैः॥१२१॥ अथ कार्यविशेषग्रहशुद्धिः॥ रविशुद्धौ गृहकरणं रविगुरुशुद्धौ
व्रतोद्वाहे॥ सौरं ताराशुद्धौ सर्वं चन्द्राश्रितं कर्म॥१२२॥ इति समयशुद्धिप्रकरणम्॥ अथ संस्कारादिप्रकरणम्॥ तत्र रजोदर्शे
नस्नानं॥ तत्र रामः॥ हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः शक्रान्वितैः शुभतिथौ शुभवासरे च॥ स्नायाद्यथार्तववती मृगपौष्णवायु
हस्ताश्विधातृभिरलं लभते च गर्भम्॥१२३॥ अथ गर्भाधानं॥ गंडांतं त्रिविधं त्यजेन्निधनभं जन्मर्क्षमूलांतकं दास्रं पौष्णमथो

ल·सं· परागद्विसंपातंतथावैधृतिम्॥पित्रोःश्राद्धदिनंदिवाचपरिघाद्यर्द्धंस्वपत्नीगमेभानूत्पातहतानिमृत्कभवनंजन्मर्क्षतःपाप
७ भम्॥१२४॥भद्राषष्ठीपर्वरिक्ताश्चसंध्या६।३०।९।१४भौमार्कार्कीनाद्यरात्रिश्चतस्रः॥गर्भाधानंत्र्युत्तरेंद्वर्कमैत्रब्राह्मस्वातीवि
ष्णुवस्वंबुपेसत्॥१२५॥केन्द्रत्रिकोणेषुशुभैश्चपापैस्त्र्यायारि११रिगैःपुंग्रहलग्नदृष्टे॥ओजांशकेऽब्जेपिचयुग्मरात्रौचित्र
दितीज्याश्विषुमध्यमंतत्॥१२६॥अथसीमंतपुंसवनविष्णुपूजा॥जीवार्कारदिनेमृगेज्यनिर्ऋतिःश्रोत्रादितिब्राह्मभेरि
क्ता४।९।१४॥मा३०कैरसा६ष्ट८वर्जेतिथिभि१८र्मासाधिपेपीवरे।सीमन्तोऽष्टमषष्ठमासिशुभदैःकेन्द्रत्रिकोणे१।४।७।१०।
५।९खलैःलाभारित्रिषु११।६।३वाध्रुवान्त्यसदृहेलग्नेचपुंभांशके॥१२७॥मासेश्वरास्सितकुजेज्यरवीन्दुसौरिश्चन्द्रात्मज
स्तनुपचंद्रदिवाकरेषु॥पूर्वोदितैःपुंसवनंविधेयंमासेतृतीयेत्वथविष्णुपूजा॥मासेऽष्टमेविष्णुविधातृजीवेलग्नेशुभेऽस्तु
गृहेचशुद्धौ॥१२८॥अथप्रसूतीस्नानं।पौष्णध्रुवेन्दुकरवाततहयेषुप्रसुतीस्नानम्।सभैत्ररवीज्यकुजेषुशस्तम्॥नार्द्रात्रयं
श्रुतिमघान्तकमिश्रमूलंत्वाष्ट्रंज्ञसौरिवसु८षट्६द्वावि१२रिक्ततिथ्यं॥१२९॥अथनामकर्म॥दैवज्ञचिन्तामणौ॥चित्रानु
राधावसुतिष्यमृगार्कविष्णुधातोत्तराश्विवरुणादितिरेवतीषु॥केन्द्रस्थितेसुरगुरौशुभदेविधौचकार्यंशुभेऽह्निनियतंशिशु
जातकर्म॥१३०॥जातकर्मोक्तनक्षत्रेकेन्द्रगेगुरुभार्गवे॥अह्निएकादशेनामकुर्याच्छुभदिनेशिशोः॥१३१॥द्वादशेदिवसेच
न्मेशुभदिवसेनामकर्मजगुः॥अथनिष्क्रामणम्॥ज्येष्ठादित्यकरोत्तराश्विविधुभेवातानुराधाहरौपुष्यावाद्दिकिमूलवासवगु राम:
रोग्यासेवित्रितुर्ये३।४।थवामन्दारोज्झितवासरेचधवलेपक्षेशुभेरात्रिपेकुर्याद्दृष्टमकेंद्रकोणरहितेपापेशिशोर्निः८क्रमं।अ ७

थ अन्नप्राशनं। रेवत्याश्विपुनर्वसुहरियुगेब्राह्म्यानुराधागुरुः स्वातीभानुमघाविशाखरजनीनाथोत्तरात्वाष्ट्रभे। वारेसूर्यश।
शांकबोधनगुरौ शुक्रेज्यरिक्तेतिथौ अन्नप्राशनमीरितं सिंहुनगे कन्याझषे सूरिभिः। षष्ठे मासि सिते पक्षे शुभैः केन्द्रत्रिकोण
गैः।१।४।७।१०।९।५। त्रिषडायगते क्रूरे चंद्रे मृत्यरि वर्ज्जिते॥१३३॥ सप्तम्येकादशी पर्व द्वादशी वर्जिते तिथौ॥ शिशूनां शोभने
चंद्रे कार्यं वदन्नभक्षणम्॥१३४॥ अथ कर्णवेधः॥ ज्येष्ठादित्यसमिरणार्कशतभपुष्येश्रविष्ठाश्विनीचित्रावैष्णवमित्रपो।
णां मृगभे वारे बुधादित्रये। त्र्या३।१।११।रि६ गते खले च शुभदे केंद्रत्रिकोणस्थिते।१।४।७।१०।९।५ वर्षे वायुजि कर्णवेधनविधिः
पक्षे सिते शोभने॥१३५॥ जन्मर्क्षे जन्ममासे च रिक्तापर्वा नमेषु च। भद्रायामशुभे चंद्रे न कुर्यात्कर्णवेधनम्॥ अथ चूडाक
रणमाह॥ गीर्वाणाम्बुप्रतिष्ठापरिणयदहनाधान्यगेहः प्रवेशाश्चौलं राजाभिषेको व्रतमपि च शुभं नैव याम्यायने स्यात्। नो
वा बाल्यस्तवार्द्धे सुरगुरुसितयोर्नैव केतूदये स्यात्पक्षं चार्द्धं च केचिज्जहति तमपरे यावदीशोन्तदग्ने॥१३६॥ तत्र दैवज्ञचि
न्तामणौ॥ रेवत्याश्विपुनर्वसूकरपतौ विष्णुत्रयेऽर्कत्रये सौम्ये वाकृतिभे च सौम्यदिवसे सूर्ये च सौम्यायने। केन्द्रे १।४।७।१०
द्वादशमृत्युकोण ८।५।९ रहिते पापे शुभे केंद्रगे १।४।७।१० चुडा कुंभ ११ मृगा १० ङ्गना ३ मिथुन ३ गो २ मीने ह याङ्के शुभा॥१३७॥
न जन्ममासे न च जन्मभे तिथौ विधौ विरुद्धे शुभतारकासु। युग्माब्दमासे न च कुर्य्यापसचूडा न कार्य्या खलु चैत्रपौषे॥१३८॥ षष्ठा६
ष्टमी८ द्वादशी१२ रिक्ता४।९।१४ पर्वा नमेषु च। गलग्रहे च भद्रायां क्षुरकर्म न कारयेत्॥१३९॥ अथ नित्यसौरम्॥ श्रीपतिः
षट्६ कृत्तिकः पंच५ मघास्त्रिमैत्रो ब्राह्माष्टको८ ऽग्रः२ चतुरुत्तराश्च। सौरीस वर्षं जन्तुराननोपि न प्राणिनातिप्रकटप्रचारः॥१४

ल॰सं॰ ८ ॥येषुभेषुप्रशंसंतिक्षौरकर्म्ममहर्षयः॥शंसंतितेषुभेषेवनखदन्तविलेखनम्॥१४१॥अथाक्षरारंभः॥गणेशविष्णुवा
ग्माप्रपूज्यपंचमाब्दके।तिथौशिवा११र्क१२दिक्१०द्वि२षट्६शर५त्रिके३रवावुदक्।लघुश्रवोऽनिलान्त्यभादितीश
तर्क्षमित्रभेचरोनसत्तनौशिशोर्लिपिग्रहःसतांदिने॥१४२॥अथविद्यारंभः॥मृगात्कराच्छ्रुतेस्त्रयेऽश्विमूलपूर्विकात्रये
गुरुद्वयेऽर्क्कजीवविच्छितेन्हि षट्६शर५त्रिके३शिवा११र्क्क१२दिक्१०द्विके२तिथौध्रुवान्त्यमित्रभेपरैःशुभैरधीतिरु
त्तमात्रिकोण९।५केन्द्र१।४।७।१०गैःस्मृता॥१४३॥अथधनुर्विद्यारंभःदीपिकायाम्॥अदितिगुरुयमार्कस्वातिचित्रानि
पित्र्यर्क्षवहरिवस्कमूलाश्वीन्दुभाग्यर्क्षकेषु॥विशनिशशिबुधाहेविष्णुबोधेऽपिपौषेत्सुसमयतिथियोगेचापविद्याप्रधा
नम्॥१४४॥अथव्रतबन्धः॥विप्राणांव्रतबंधनंनिगदितंगर्भाष्टमेजन्मतोवर्षेवाप्यथपंचमेक्षितिभुजांषष्ठेतथैकादशे॥
१४५॥वैश्यानांपुनरष्टमेप्यथपुनःस्याद्द्वादशेवत्सरेकालेऽथद्विगुणेगतेनिगदितंगौणंतदाहुर्बुधाः॥१४६॥अथनक्षत्राणि
॥पूर्वाषाढहरित्रयेऽश्विमृगभेहस्तत्रयेरेवतीज्येष्ठापुष्यभगेषुचोत्तरगतेभानौचपक्षेसिते।गो२मीन१२प्रमदा६धनु९र्व
नचरे५शुक्रेगुरौभास्करेपंचम्यांदशमीत्रये१०।११।१२व्रतमिहश्रेष्ठंद्वितीयाद्वयोः॥१४७॥रामः॥कवीज्यचन्द्रलग्नपारिपो
मृतोव्रतेऽधमाःव्यया१२कुभागवेतथाशनौ१मृतौ८सुते५खलाः॥१४८॥व्रतबन्धेऽष्ट८षट्६रि६फ१२वर्जिताःशोभनाः
शुभाः।त्रिषडाये३।६।११।खलाःपूर्णोगोकर्कस्थोविधुस्तनौ॥१४९॥वसिष्ठः।जीवोदयेजीवगृहोदयेवाजीवांशकेजीवनि रामः ८
रीक्षितेच।अस्तंगतोपिव्रतबंधनेचवागीशतुल्योभवतिद्विजेंद्रः॥१५०॥रामः॥कृष्णेप्रदोषेऽनध्यायेशनौनिश्यपरान्हके।

प्राक्संध्यागर्जितेनेष्टोव्रतबन्धोगलग्रहे॥१५१॥कृष्णपक्षेचतुर्थीचसप्तम्यादिदिनत्रयम्॥त्रयोदशीचतुष्कंचअष्टावेते
गलग्रहाः॥१५२॥शुचिशुक्रपौषतपसांदिग्रविरुद्रार्क१०।२।११।१२संख्यासिततिथयः॥भूतादित्रितया१४।३०।११ष्टमो
संक्रमणंस्यात्व्रतेष्वनध्यायाः॥१५३॥गर्गः॥अयनेदक्षिणेचैवशयनेबोधनेहरेः॥व्रतबन्धंनकुर्वीतमन्वादिषुयुगादि
षु॥१५४॥युगादितिथयः॥माघेपञ्चदशीकृष्णानभस्येचत्रयोदशी॥तृतीयामाधवेशुक्लानवम्यूर्ज्जेयुगादयः॥१५५॥म
न्वादितिथयः॥अश्वयुजीशुक्लनवमीद्वादशयूर्ज्जेमधौतृतीयाच॥भाद्रपदेपितृतीयाश्रावणेमासित्वमावास्या॥१५६॥ए
कादशीचपौषेशुचिसितदशमीसप्तमीचमाघे॥बहुलाष्टमीनभस्येप्याषाढीकार्त्तिकीचतद्वत्॥१५७॥फाल्गुनसितपंचदशी
चैत्रज्येष्ठस्यपौर्णमासीच॥मन्वंतरादयइमाश्चतुर्दशोक्ताःबुधैःपुण्याः॥१५८॥बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगं५।९
११।२।७।श्रेष्ठोगुरुःख१०षट्६त्र्याद्ये३।१पूजयान्यत्रनिन्दितः४।८।१२।४०२स्वोच्चेस्वभेस्वमैत्रेवास्वांशेगर्मोत्तमेगुरुः॥रि
ष्फाष्टतूर्यगो१२।४।८पीष्टोनीचारिस्थःशुभोप्यसत्॥१५९॥चैत्रेमासेभास्करेमीनसंस्थेकुर्यान्मौञ्जीबंधनंब्राह्मणानां॥शु
क्रस्यास्तेवाक्पतेर्नावलोक्यंनैवग्राह्याचन्द्रगुर्वोश्चशुद्धिः॥१६०॥मीनेस्थितेऽर्केद्विजपुङ्गवानांव्रतस्यबन्धंखलुमासिचैत्रे
॥नगर्जदोषोब्दविरुद्धदोषोगलग्रहानध्ययनादिदोषः॥१६१॥मीनेगीर्वाणमंत्रिण्यथदिवसकरेचन्द्रताराद्यशुद्धौचूडा
कर्मोपनीतंव्रतमिहनियतंप्रोच्यतेगर्गमुख्यैः॥गर्भाद्वर्षाष्ट८मेवापरिणयनविधिर्जन्मतोवापिसौख्यंविद्यातत्वार्थवेत्ता
सुतधनसहितोभाग्ययुक्तोऽधिकारी॥१६२॥इतिव्रतबन्धः॥अथाग्न्याधानम्॥यशोधरः॥रेवत्युत्तररोहिणीगुरुविधुज्ये

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वै | ज्ये | आ | श्रा | भा | कु | का | अ | पौ | मा | फा | चै |
| ० | १५ | १० | ८ | ३ | ९ | १२ | ० | ११ | ७ | १५ | ३ |
| अमावास्या | | १५ | ३० | | | १२ १५ | अमावास्या | | | | १५ |
| शु | | शु | कृ | शु | शु | शु | ० | शु | शु | शु | शु |

| मासाः१२ मन्वादितिथिपक्षशुक्लकृष्ण |
|---|

| वै | भा | का | मा | युगादितिथि |
|---|---|---|---|---|
| ३ | १३ | ९ | ३० | |
| शु | कृ | शु | कृ | पक्ष· शु० कृ० |

| र· | बु | शु | श | चं | मं | गु | रा | के | ग्र |
|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | ३ | २ | ३ | ३ | ३ | २ | ० |

ष्ठाविशाखाग्निभे जीवे शीतकरे कुजेऽथत
रणौ केन्द्रे त्रिकोणेऽथवा १।४।७।१०।९।५ पा
पेचोपचयस्थितेः ३।१।६।११।१० शुभति
थौ लग्ने विधौ शोभने कुर्य्यादग्निपरिग्रहं
सुरगुरौ पृष्ठे शुभे रात्रिपे॥ १६३॥ रामः॥ सेकातिथिर्वारयुक्ताकृता ४ प्ता
शेषे गुणे ३ भ्रे भुवि वन्हिवासः। सौख्याय होमे शशि १ युग्म २ शेषे प्राणार्थनाशौ
दिवि भूतलस्थे॥ १६४॥ सूर्य्यभात्त्रि ३ त्रिभे ३ चान्द्रे सूर्य्यविच्छुक्रपङ्गवः। चन्द्रारेज्यागुशिखि
नो नेष्टा होमाहुतिः खले॥ १६५॥ अथ राज्याभिषेकः॥ दैवज्ञचिंतामणौ॥ राशीशलग्नेशदशाधि
नाथैः सूर्य्यारतारापतिभिर्बलिष्ठैः॥ समुद्गतैर्भार्गवजीवचन्द्रैरिष्टोऽभिषेकश्च महीपतीनां॥ १६६
॥ रेवत्युत्तरमैत्रपुष्यहरिभे ज्येष्ठाश्विनी रोहिणी चंद्रादित्यदिवाकरे शुभतिथौ केन्द्रत्रिकोणे शुभे॥ १।४।७ १०।५।९। क्रूरे चो
पचय ३।६।१०।११ स्थिते स्थिरगृहे वा रेवुधादित्रये चन्द्रेऽर्के च महीभृतां मुनिवरैरुक्तोऽभिषेकः शुभः॥ १६७॥ अथ दीक्षाका
लः॥ अस्मत्संग्रहे॥ वैशाखे श्रावणे चैत्रे आश्विने कार्तिके तथा॥ मार्गशीर्षे तथा माघे फाल्गुने च शुभावहा॥ १६८॥ शैवागमे॥ शु
क्लपक्षे शुभा दीक्षा कृष्णमध्ये फलप्रदा॥ पंचम्ये ५ कादशी ११ शुक्लासप्तमी ७ चत्रयोदशी १३।५ दशमी १० शुक्लपक्षस्य द्वादशी १२

त्रुविशेषतः। तृतीया ३ विहितानित्यंषष्ठीसर्वत्रनिन्दिता॥१६९॥ रामार्च्चनचन्द्रिकायाम्॥ रवौगुरौ शनौसोमे कर्तव्याबुध
शुक्रयोः॥ अश्विनीरोहिणीस्वातीविशाखाहस्तभेषु च॥ ज्येष्ठोत्तरात्रयेषुचं कुर्य्यान्मंत्राभिषेचनम्॥१७०॥ तथा च॥ चित्रो
त्तरेवतीपुष्यमृगाख्यंशततारकाः॥ धनिष्ठामित्रमघामूलश्रवणोसर्वेदीक्षणम्॥१७१॥ शुभोदयेशुभैः केन्द्रधर्मात्मज१
४।७।१०।५।९ गृहस्थितैः॥ सर्वेदीक्षाप्रशस्तास्यात्पापैस्त्रिषडायगैः॥३।६।११॥:॥१७२॥ अथमोक्षदीक्षा॥ श्रीपतिः॥ देवा
चार्य्येकर्म१०भावप्रपन्नेपापैर्धर्म९स्थानगैर्वीर्य्यहीनैः॥ योगेप्रवर्ज्याह्यपेशुस्थिरेचकार्यातज्ज्ञैस्तत्रदीक्षाशुभसोः॥१७३
॥सिद्धिनिःश्रेयसे॥ निन्दितेष्वपिकालेषुदीक्षोक्ताग्रहणेशुभा॥ रविग्रहेसिद्धिदाशीघ्रंदीर्घेकालेशशिग्रहे॥१७४॥ अथविवा
हः॥ तत्ररामः॥ गुरुशुद्धिवशेनकन्यकानांसमवर्षेषुषडब्दकोपरिशात्॥ रविशुद्धिवशाच्छुभोवराणामुभयोश्चन्द्रविशुद्धि
तोविवाहः॥१७५॥ तत्रमैथिलः॥ रेवत्युत्तररोहिणीमृगमघामूलानुराधाकरस्वातीषुप्रमदातुलामिथुनगोलग्नेविवाहः
शुभः॥ मासाः फाल्गुनमाघमार्गशुचयोज्येष्ठस्तथामाधवः शस्ताः सौम्यदिनंतथैवतिथयोरिक्ताकुहूवर्जिताः॥१७६॥ अ
थवरकन्ययोः प्रीतिः। वर्णोयोनिश्चमैत्रीचग्रहाणांगणसंज्ञकम्॥ वर्गंचराशिकूटंचनाडीचैतेगुणाधिकाः॥१७७॥ तत्र
वर्णः॥ कर्कालिमीन४।८।१२ विप्रेशोमेषःसिंहो१धनु९र्नृपः॥ वृषः२कन्या६मृगो१०वैश्यः शूद्रोयुग्म३तुला७घटः११॥१७८
॥वर्णश्रेष्ठानुयानारीतस्याभर्तानजीवति॥ यदिजीवतिचेद्भर्ताविदेशनिरतः सदा॥१७९॥ अथयोनिः॥ अश्वः शतभिषाश्विन्योरे
वतीभरणीगजः॥ छागेश्वकृत्तिकापुष्यौनागौचमृगरोहिणी॥१८०॥ आर्द्रामूलमपिश्वानौमूषकौभग पैतृकौ॥ आदिस

रिक्षश्च मार्जारौ आपो विष्णुश्च मर्कटौ॥१८१॥ अहिर्बुध्न्यार्यमेशा वै मित्रज्येष्ठा मृगौ तथा॥ वसुप्रोष्ठपदे सिंहौ हस्तस्वाती च माहिषौ॥१८२॥ चित्राविशाखे व्याघ्राख्यौ अभिजिद्विश्वे च बभ्रुकौ॥ योनयः कथिता भानां वैरं मैत्रीं विचारयेत्॥१८३॥ श्रीपतिः॥ गोव्याघ्रं गजसिंहमश्वमहिषं श्वानं च बभ्रूरगं वैरं वानरमेषयोश्च सुमहत्तद्वद्विडालोन्दुरं॥ लोकानां व्यवहारतोन्यदपि चज्ञात्वा प्रयत्नादिदं दंपत्योर्नृपभृत्ययोरपि सदा वर्ज्यः शुभस्यार्थिभिः॥१८४॥ राश्याधिपोल्लघुजातके॥ कुज १ शुक्र २ ज्ञे ३ न्दु ४ र्क ५ ज्ञ ६ शुक्र ७ कुज ८ जीव ९ सौरि १० यम ११ गुरवः १२ मेषाः॥१८५॥ शत्रू मन्दसितौ समश्च शशिजो मित्राणि शेषा रवेः॥ तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः॥१८६॥ जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोरिः सिता

| ॥अथमैत्रीचक्रलिख्यते॥ | | | | | | | |
|---|---|---|---|---|---|---|---|
| र॰ | चं॰ | मं॰ | बु॰ | बृ॰ | शु॰ | श॰ | ग्रहा॰ |
| चं॰बृ॰मं॰ | र॰बु॰ | र॰चं॰बृ॰ | शु॰र॰ | मं॰चं॰र॰ | श॰बु॰ | बु॰शु॰ | मित्राः |
| बु॰ | बृ॰मं॰ शु॰श॰ | शु॰श॰ | मं॰श॰बृ॰ | श॰ | मं॰बृ॰ | बृ॰ | समाः |
| श॰शु॰ | ०० | बु॰ | चं॰ | बु॰शु॰ | र॰चं॰ | र॰चं॰मं॰ | शत्रवः |

र्कौ समौ॥ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे॥१८७॥ सूर्ये सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा॥ सौम्यार्कौ सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी॥१८८॥ शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयः॥ इति ग्रहमैत्रीचक्रम्॥ अथ गणाः॥ तत्र श्रीपतिः॥ हस्तस्वातीश्रुतिमृगशिरःपुष्यमैत्राश्विभानि पौष्णादित्ये जगुरिह बुधा देवसंज्ञानि भानि। पूर्वास्तिस्रः शिवभरणीरोहिणीश्चोत्तराश्च प्राहुर्मर्त्याह्वयमुडुगणं मूनमेतन्मुनीन्द्राः॥१८२॥ चित्राश्लेषानिर्ऋतिपितृभेवासवे वासवाख्यशक्राग्न्योभे वरुणदहने चैव

रक्षोगणोऽयम्। श्रेष्ठा प्रीतिः स्वकुलगणयोर्मध्यमा देवपुंसां मर्त्यैर्दैत्यैः सह रक्षसां वैरमाहुः॥१९०॥ अथ वर्गाः॥ तत्र रामः॥
अ८ क५ च६ ट४ त७ प१ य३ श२ वर्गाः खगेशमार्जारसिंहश्वानाम्॥ सर्पाखुमृगावीनां निजपंचमवैरिणामष्टौ॥१९१॥ अथ
राशिकूटं रत्नमालायाम्॥ षट्६ काष्ट८के मृत्युरपत्यहानिः पाणिग्रहः स्यान्नवपंचमेषु९।५ नैस्वं धनं द्वादशके२।१२ प
रेषु प्रेमातिरेको हि वधूवरस्य॥१९२॥ ग्रन्थान्तरे॥ एकाधिपत्ये समसप्तके वा लाभे तृतीये दशमे चतुर्थे॥ नाडीवियोगं गण
नेत्रभावं न चिंतयेदुद्वहनादिकाले॥१९३॥ ग्रहमैत्र्ये राशिदोषो नास्ति॥ अथ नाडीचक्रम्॥ तत्र वसिष्ठः॥ आवृत्तिभिर्भे
स्त्रिभिराशिवभाद्यैः क्रमोत्क्रमाभ्यां गणयेदुडूनि। पदैकपर्वण्युभयोश्च धिष्ण्ये नेष्टा न नाड्यामेकनाडी॥१९४॥ राश्येकोऽपि

क रो मृ आ पु पू श्ले
भ म
अ पू
रे उ
उ ह
पू चि
श स्वा
ध श्र अ उ पू मू ज्ये ऽनु वि

भिन्नमृक्षद्वयं स्यान्नक्षत्रैक्ये राशियुग्मं तथैव॥ नाडीदोषो नो गणा
नां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात्॥१९५॥ अथ पादवेधः स्व
रोदये। आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्॥ द्वितीयेन तृतीयं
तु तृतीयेन द्वितीयकम्॥१९६॥ अथ विवाहदिवसशोधनम्॥ तत्रा
दौ दशयोगचक्रम्॥ सूर्येक१ वेद४ ऋतवो६ दश१० रुद्र११ युक्ताः
पञ्चैक१५ नागशिशिरांशु१८ नवैक१९ खाश्विः२० आद्यर्क्षतः श
शिदिवाकरभानियुक्तं भागं चरेयमुडुभिर्दशयोगचक्रम्॥१९७॥ वा

| | | |
|---|---|---|
| अ | भ | कृ |
| आ | मृ | रो |
| पु | पू | श्ले |
| उ | पू | म |
| ह | चि | स्वा |
| ज्ये | अनु | वि |
| मू | पू | उ |
| श | ध | श्र |
| पू | उ | रे |

इति नाडीचक्रम्०॥

सुंवर्षाग्निभूपालचौरमृत्युज्वराः क्रमात्। वज्रवार्वैस्सतिर्नूनंदशयोगफलंभवेत्।एतन्मितेशेषांकेविवाहोनिषिद्धः॥
१९८॥ अथलत्ता॥ नक्षत्रंद्वादशंभानुस्तृतीयंलत्तयाकुजः॥ षष्ठंजीवोष्टमंसौरिर्हन्तिदक्षिणतःसदा॥१९९॥वामे
नसप्तमंचांद्रीनवमंसिंहिकासुतः॥पञ्चमंभृगुजोहन्तिद्वाविंशंपूर्णचन्द्रमाः॥२००॥अथपातः॥अस्यसंग्रहे।सूर्य्य
भात्सर्प्पमघाचचित्रामैत्रंतथैवच॥श्रवणोरेवतीप्रोक्तंपातभंमुनिसम्मतं॥२०१॥अश्विनीभादितोगण्यंपातभंयदिसं
मतम्॥ तद्दिनेचविवाहादिनकर्तव्यंकदाचन॥२०२॥अथयुतिजामित्रदोषः।अन्निःपापात्सप्तमगःशशिर्यदिभवेत्सा
पेनचेत्संयुतो यत्नेनापिविवर्ज्जयेन्मुनिमतोदोषोपिसंकथ्यते।यात्रायांविपदोगृहेषुमरणंस्त्रीरुग्रोगोमहानुद्वाहेविध
वाश्रुतेचमरणंमूलंचपुंस्कर्म्माणि॥२०३॥तत्रविशेषः॥पातयुक्तंचनसत्रंविवाहनक्षत्राच्चतुर्दशसम१४विवाहेनेष्टं॥अ
थपंचशलाका॥क्रूरैर्भुक्तंक्रूरगंतव्यमर्कसंक्रान्ताक्रान्तंक्रूरविद्धंचनेष्टम्।यच्चोत्पातैर्भौमदिव्यान्तरिक्षैर्दुष्टंतद्वल्लूरलत्ताह
तंच॥२०४॥चक्रेतस्मिन्नेकरेखास्थितेनज्ञेयंनूनंविद्धमसंग्रहेण॥केचित्तस्मिन्प्रोच्यतेपादवेधोभानांविन्यस्तत्रलत्ता
निपातः॥२०५॥उत्तराषाढस्यान्त्यपादःश्रवणचतुर्दण्डकादौअभिजिद्भुक्तिः॥यस्याशशिःसप्तशलाकाभिन्नःपापैरपापै
रथवाविवाहे॥उद्वाहवस्त्रेणतुसावृताङ्गीस्मशानभूमौरुदतीप्रयाति॥२०६॥अथखार्जुरचक्रम्॥तत्रश्रीपतिः॥व्याघात
मूलपरिघव्यतिपातपूर्वगंडातिगण्डकुलिशेषुसवैधृतेषु॥आदित्यचन्द्रपितृसर्प्पभदस्रमूलमैत्रात्स्यतिष्यसुरवार्द्धकिभा
निमूर्द्धि॥२०७॥यस्मिन्दिनेकरेखायांसूर्य्यचन्द्रमसौभवेत्॥दृष्टिपातस्तयोस्तस्मिन्मंगलंचविवर्जयेत्॥२०८॥अथवा

णापंचकं॥ धार्य्यातिथिः १५ सूर्य्य १२ दृशा १० ष्ट ८ वेदा ४ संक्रांतितोपातदिनैश्चयोज्या॥ ग्रहैर्विभक्ताय दियत्रपञ्च ५ शेषो रुजाग्निर्नृपचौरमृत्युः॥ २०९॥ अथोपग्रहाः॥ भूकम्पः सप्त ७ मर्क्षं भवति सवितृभात्पञ्चमे ५ विद्युयुक्तः शूलं चैवाष्ट ८ संख्येशनिरिति दशमे १० केतुरष्टादशे च १८ दण्डस्तिपञ्च १५ संख्येसनवदशमितेनूनमुल्काप्रदिष्टा॥ पिणोहिः सप्तसंख्ये १४ मुनिभिरभिहितश्चात्रनिर्घातपातः॥ २१०॥ भादेकविंशति २१ मितात्कथितास्तमोह २१ निर्घात २२ कम्प २३ कुलिशाः २४ परिवेष २५ युक्ताः। एषिन्दुगेषुनशुभं खलु कर्मकार्य्यंसिद्धिं प्रयातिदहनास्त्रविषादिकर्म॥ २११॥ अथक्रान्तिसाम्यम्॥ मुहूर्तचिन्तामणौ। पञ्चा ५ स्याजौ गो २ मृगौ १० तौलि ७ कुंभौ ११ कन्या ६ मीनौ १२ कर्का ४ ली ८ चाप ९ युग्मे ३ तत्रान्योन्यं चंद्रभान्वोर्निरुक्तं क्रान्तेः साम्यं नोशुभं मंगलेतत्॥ २१२॥ अथपट्टाचक्रम्॥ तत्रकाशिनाथः॥ पट्टाकारं लिखेच्चक्रमष्टकोणसमन्वितम्॥ यस्मिन्नृक्षे स्थितः सूर्य्यस्तदाद्यं मध्यमंत्रयं। त्रयं ३ त्रयं ३ च सर्वत्र ततः पूर्वादितो लिखेत्॥ अस्मत्संग्रहे। पसेद्द्योन्नं शुभदं धनलाभमृत्यूदौर्भाग्यसंततिसुखेविधवात्वसक्ता। धान्यानिसंचयकरी सुखसंपदाप्तिर्मध्यादितः फलमुशंति हसव्य

ह रो मृ आ पु पू श्ले
भ अ रे उ पू श
म पू उ ह चि स्वा वि
ध श्र अभि उ पू मू ज्ये अनु

अथसप्तशलाकाचक्रम्।



ल॰सं॰ १२

| अथक्रान्तिसाम्यम्॰ |
| --- |
| १ १२ ११ / २ १० / ३ ९ / ४ ८ / ५ ६ ७ |

मार्गे॥२१४॥ अथकर्तरीयोगः॥ तत्र वराहः। द्वयोः पापग्रहयोर्मध्ये चन्द्रलग्नौ भविष्यतः तदा मृ-
त्युर्विजानीयात्स्वल्पाब्देनात्र संशयः॥२१५॥ सौम्ययोगात्कर्तरीयोगो न स्यात्। वसिष्ठः। एकार्ग-
लोपग्रहपातलत्तजामित्रकर्तर्युदयास्तदोषाः॥ नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्कोऽभ्युद-
ये तु दोषाः॥२१६॥ उपग्रहर्क्षं कुरुबाल्हिकेषु कलिङ्गवङ्गेषु च पातितं भं॥ सौराष्ट्रशाल्वेषु च लत्तितं
तं भं त्यजेत्तु विद्धं किल सर्वदेशे॥२१७॥ मुहूर्तचिन्तामणौ॥ जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्र-
हः॥ एकाधिपत्ये राशीशमैत्रे वा नैव दोषकृत्॥२१८॥ श्रीपतिः। उदय-
गतनवांशे स्वेशदृष्टो युतो वा न भवति यदि मृत्युः स्यात्तदानीं वरस्य।
परिणयसमये चेल्लेवास्तोदयेशः स्वपतिसहितदृष्टो मृत्युकारी च वध्वाः॥२१९॥ विवाहपट्ट-
ले। भौमे लग्न१ कलत्र७ नैधन८ गते शुक्रारि६ सप्ता७ष्ट८ गे चन्द्रे रन्ध्र८ विलग्न१ षष्ठ६ निरते
लग्ना१स्तगे७ भास्करे॥ तद्वद्भानुसुते १।७ गुरौ निधनगे८ सौम्येऽष्ट८ जामित्रगे७ जायां७ भो-
धि४ विलग्न१ कर्म१० निरते राहौ न पाणिग्रहः॥२२०॥ रामः॥ पापौ कर्तरिकारिकौ रिपुगृहे नी-
चेस्तगौ कर्तरीदोषो नैव सितेऽरिनीचगृहगे तत्षष्ठ६दोषोऽपि न। भौमेऽस्तेरिपुनीचभे न हि भ-
वेद्दोषोऽष्ट८मो दोषकृन्नीचे नीचनवांशके शशिनि रिष्फा१२ष्टा८रिदोषोऽपि न॥२२१॥ श्रीपतिः

| अथपट्टाकारचक्रम्॰ |
| --- |
| ०००० / ०००००० / ००००० ० ९ ०००० / ०००० / ००००० |

रामः १२

।हिबुक४ धर्म्म९ सुतो५ द्य१ कर्म्मसु१० त्रि३ शराजगुणे यदि वा सिते। यत् शुभं शुभतां समुपैति तच्छुभफलं नितरामभि
वर्द्धते॥२२२॥ अब्दायनर्त्तुतिथिमासभपक्षदग्धास्तिथ्यन्धकाणवधिरांगमुखाश्च दोषाः॥ नश्यन्ति विद्गुरुसितेष्विह केन्
द्रकोणे तद्वच्च पापविधुयुक्तनवांशदोषाः॥२२३॥ लग्नाधिपं विना द्यूने सर्वे खगा नेष्टाः॥ अथ गोधुली॥ नास्मिन् ऋक्षं न तिथि
करणं नैव लग्नस्य चिन्ता नो वा वारो न च लव विधिर्नो मुहूर्त्तस्य चिन्ता। नो वा योगो न मृतिभवनं नापि जामित्रदोषो गोधूलिः
सा मुनिभिरुदिता सर्वकार्ये प्रशस्ता॥२२४॥ ग्रन्थान्तरे॥ लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकं साधु तदा वदन्ति। लग्ने वि
शुद्धे सति वीर्य्ययुक्ते गोधूलिकं नैव वदन्ति सन्तः॥२२५॥ रामः॥ अस्तं याते गुरुदिवसे सौरे सार्के लग्नान्मृत्यौ रिपुभवने च
न्द्रे कन्यानाशः तनुमदनमृत्युस्थे भौमे वोढुर्नाशो लाभे११ धनसहजे३ चन्द्रे सौख्यम्॥२२६॥ अथ वधूप्रवेशः॥ समाद्विप
ञ्चाङ्कदिने विवाहाद्वधूप्रवेशोऽष्टि१६ दिनान्तराले। शुभः परस्ताद्विषमाब्दमासे दिनेऽक्ष५ वर्षात्परतो यथेष्टम्॥२२७॥ अथ
प्रवेशनक्षत्राणि॥ ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले। वधूप्रवेशः सन्नेष्टो रिक्ता४।९।१४ रार्के१२ बुधे परैः॥ अथ द्विरा
गमः॥ दैवज्ञचिन्तामणौ॥ ज्येष्ठापुष्यपुनर्वसूत्तरहरिब्रह्मानुराधाश्विनीहस्तादित्रयपौष्णमूलमृगभे मेषालिकुंभे रवौ॥ क
न्यातौलि७ नृयुग्म३ मीन१२ मकरे१० लग्ने च यात्रातिथौ नारीणां शुभदो द्विरागमविधौ जीवज्ञशुक्रेऽहनि११ शुक्रेऽपसेका
र्य्यमिति॥ अथ पुंनार्य्योः प्रथमसमागमे॥ उत्तरात्रयरोहिण्यां पुष्ये मैत्रे करे मृगे॥ चित्रास्वातीविशाखासु पुंनार्य्योः संगमः
शुभः॥२२८॥ कन्या६ चाणिक७ मीन१२ गो२ लि८ भवने केन्द्रस्थिते सद्ग्रहे पापे विक्रम३ लाभ११ वैरि६ सहिते द्यूने७ शुभैरी

स्थिते। वारे सौम्यदिनेप्यविष्टिकरणे प्राप्ते च रिक्ताष्टमे एकामारहितेतिथौ शुभभविथौ दारोपभोगः स्मृतः॥२२९॥ दैत्येज्यो ह्यभि
मुखदक्षिणे यदि स्याद्गच्छेत्पुनर्हि शिशुगर्भिणी न वोढाः॥ बालस्थे ह्वजति विपद्यते नवोढा चेद्वन्ध्याभवति च गर्भिणी लग
र्भो॥२३०॥ नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः॥ नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दो
षकृन्नहि॥२३१॥ पित्र्ये गृहे चेत्कुचपुष्पसंभवस्तद्दानदोषः प्रतिशुक्रसंभवः॥ भृग्वङ्गिरोवत्सवसिष्ठकश्यपात्रीणां भरद्वा
जमुनेः कुले तथा॥२३२॥ इति लघुसंग्रहे विवाहद्विरागमप्रकरणम्॥ अथ द्व्यंगयात्रायां राहुविचारः॥ अलिधनुर्मकरेके पू
र्वेसंस्थे च राहुर्घटशफरतयाग्नेर्दक्षिणे सैंहिकेयः॥ वृषमिथुनकुलीरे पश्चिमे दिग्विभागे हरिसुवतितुलायां चोत्तरे द्व्यंगराहुः
॥२३३॥ सोमदत्तः। अग्रतो राहुर्वैधव्यं दक्षिणे सुतहा भवेत्॥ पृष्ठे पुत्रनतीप्रोक्ता वामे सौभाग्यदायिनी॥२३४॥ यस्या भृगु
र्दक्षिणसन्मुखस्थोयस्मी हृशी नाम सुभोगमे सदा॥ तथैव राहुः परिकल्पनीयो द्व्यंगं न कार्यं भृगुजाद्विलोमम्॥२३५॥ अथ या
त्राप्रकरणमारभ्यते॥ तत्र रामः॥ न षष्ठी न च द्वादशी चाष्टमी नो सिताद्याति तिथिः पूर्णिमा नैव रिक्ता॥ हयादित्यमैत्रेंदुजीवांत्यह
स्तः श्रवो वासवैरेव यात्राप्रशस्ता॥२३६॥ पूषभात्कृत्तिकाद्येपादे चन्द्रोऽध्वन्नस्थितः॥ तावत्क्षुत्क्षोभवेदन्धः सन्मुखे गमने शु
भः॥२३७॥ अथ सर्वांगी॥ तिथिवारञ्च नक्षत्रं नामाक्षरसमन्वितम्॥ द्वि२ त्रि३ चतुर्भिर्गुणितं सप्ता७ष्ट८रस६भाजितम्॥२३८
॥ आदिशून्ये भवेद्धानिर्मध्यशून्ये रिपोर्भयम्॥ अन्त्यशून्ये भवेन्मृत्युः सर्वांगी विजयी भवेत्॥२३९॥ श्रीपतिः॥ मूर्तिः१ कोशो२
धन्विनो३ वाहनानि४ मंत्रः५ शत्रुः६ मार्ग७ आयु८ र्मनश्च९ व्यापार१० श्च प्राप्ति११ रप्राप्ति१२ रेवं लग्नात् भावा द्वादशैते

विचिन्त्याः॥२४०॥ घ्नंतिक्रूरास्त्वायारिवर्ज्येहिभावान्नन्यापारंनिघ्नतःसूर्य्यभौमौ॥ सौम्याःपुष्यंत्येवहित्वारिभावंशुक्रश्चा
स्तंमृत्युमूर्त्तिस्तथेन्दुः॥२४१॥ आयारिषुयमारौचेत्कुक्षिभाजःशुभग्रहाः॥ प्रयाणेनृपतेर्यस्यहस्तेस्यात्तस्यमेदिनी॥२४२
॥गुरुर्लग्नेरविःषष्ठेरन्ध्रेनेन्दुःस्वगच्छतः॥ यस्यतस्यारिसेनाग्रेखलमैत्रीवनस्थिरा॥२४३॥ गुरौकेन्द्रे १।४।७।१० त्रिको
णे ५।९ चवालाभे ११ चकर्मणि १०॥ कल्याणयोगोभूपस्ययातुःकल्याणकृद्भवेत्॥२४४॥ ग्रन्थान्तरे॥ लग्नारिकर्म्महिबु
केषुशुभेसितज्ञेद्यूनान्त्य ‾ लग्नरहितेष्वशुभग्रहेषु॥ यातुर्भयंनभवतिप्रतरेत्समुद्रंपद्यस्मनाकिमुतवारिसमागमेन
॥२४५॥ श्रीपतिः॥ एकेनापिज्ञास्फुजिद्वाक्पतीनांयोगःप्रोक्तःकेन्द्रधर्मात्मजेषु १।४।७।१०।९।५ द्वाभ्यामेषांवाधियोगा
भिधानंनूनंसर्वैरेवयोगाधियोगः॥२४६॥ योगेनयेननृपतयोरिपुगृहंव्रजंतिक्षेमेनतेगमनमागमनंचकुर्युः॥ क्षेमंयशो
रिपुविनाशमथाधियोगेयोगाधियोगजयेद्धरित्रीम्॥२४७॥ जननसमयलग्नान्नैधनेजन्मभाद्वानिजरिपुभवनाद्वाशत्रु
भेलग्नयाने।पतिभिरुदितदीपैर्लग्नगैःपार्थिवानांगमनमथविषंवाभक्षणंतुल्यमेव॥२४८॥ रत्नकोशे॥ षष्ठाष्टमांत्या
१२ स्तगतेविलग्नपेयात्रानरेयाशुभदैरपिग्रहैः॥ विनश्यतेषांफलमत्रलग्नपोमृत्युंकरोत्येवयतोहिभूपतेः॥२४९॥ ल
ग्नाधिपेसूर्य्यसुतेचनीचगेगुराजितेनैधनशत्रुगेहे॥ एवंनृपोयातिसरिराजयोगेप्राप्नोतिमृत्युंयवनावदन्ति॥२५०॥ अथ
प्रस्थानविधिः॥ गृहाद्गृहांतरंगर्गःसीम्नःसीमांतरंभृगुः॥ शरक्षेपाद्भरद्वाजोवसिष्ठोनगराद्बहिः॥२५१॥ प्राच्यांमहानिशुन
यःप्रवदन्तिसप्तयाम्यामतीवशुभदानिदिनानिपञ्च॥ त्रीण्येवपश्चिमदिशिक्षितिनायकानांप्रस्थानकेषुदिवसद्वयमुत्त

रेस्यात्॥२५२॥भुक्त्वागच्छतियदिचेत्तैलगुडक्षीरंपक्वमांसानि॥विनिवर्त्ततेसरुग्रःस्त्रीद्विजमपमानमृत्युः॥२५३॥शकु
नादिकंग्रन्थविस्तारभयान्नलिखितंयतोबालानांग्रन्थविस्तारोदुस्तरः॥अन्यद्भुन्यारवगम्यविरुद्धशाकुनंविचार्यव्रजेत्॥
सौदामिनीवर्षणवर्जितेषुनाकालजेषुप्रवसेन्नरेंद्रः।आसप्तरात्राध्रुवमब्दवेषुदिव्यांतरिक्षक्षितिजेषुचैवम्॥२५४॥इति
लघुसंग्रहेयात्राप्रकरणम्॥तत्ररामः॥यद्धांरकृ९सुते५शा११द्विस्मित१०मसौग्रामःशुभोनामभात्स्ववर्गोद्विगुणंविधा
यपरवर्गाद्यंगजैःसेवितम्काकिन्यस्त्वनयोश्चतद्विवरतोयस्याधिकःसोऽर्थदः॥२५५॥अथहारा।द्विज८वैश्य२।६।१०
शूद्र३।७।११नृप१।५।९राशीनांहितंपूर्वतःगो२सिंह५नक्र१०मिथुनं३निवसेन्नमध्यग्रामस्यपूर्वेककुभोलि८झषा१२कु
नाश्व६कर्की४धनु९स्तुलभ७मेष१घटा११श्चतद्दुर्गाःस्वपञ्चमपराबलिनःस्युरैन्द्राः॥२५६॥एकोनितेष्टर्क्षहताद्विति
घ्योरूपोनितेष्टायहतेन्दुनागैः८१॥युक्ताघनेर्ध्यापिपुताविभक्ताभूपाश्विभिः२१६शेषमितोहिपिण्डः॥२५७॥खेष्टायन
स्तत्रभवोऽयदेर्घ्यंहृत्स्वाद्विस्तृतिविस्तृतिहृच्चदीर्घता॥आ।याध्वजोधूम्रहरिश्वगोखरेभाध्वांक्षकाःपिण्डइहाष्टशेषे
ते॥२५८॥अस्मत्संग्रहे॥पिंडेनवा९ष्टा८निर२गजा८ष्ट८संख्यैःक्रमेणगुण्यःखलुपञ्चधावा॥विभाजितेष्टा८र्क्ष१२गा
जा८र्क्ष२७स्वार्कै१२८रायोधनर्क्षेमरहायुरुक्तम्॥२५९॥ध्वजोधूम्रोऽथसिंहश्वसौरभेयःखरोगजः॥ध्वांक्षश्चेतिक्रमे
णैवदायाष्टकमुदाहृतम्॥२६०॥रामः॥ध्वजादिकाःपूर्वदिशिध्वजेमुखंकार्योहरौपूर्वयमोत्तरेतथा।प्राच्यांवृषेप्राग्यमयो
र्गजेऽथवापश्चादुदक्पूर्वयमोद्विजादितः॥२६१॥भंनाग८तष्टंन्ययईरितोऽसौध्रुवोऽदिनामाक्षरयुक्सपिण्डः॥तष्टोगुणै

विन्दूकृतान्तभूपाद्यसाभयेयुर्न्नेशुभोन्तकोऽत्र॥२६२॥ दिक्षुपूर्वादितो शाला ध्रुवाभू१ द्वौ२ कृतो४ गजाः८ शाला ध्रुवाद्याः
संयोगः सैको वेश्म ध्रुवादिकम्॥२६३॥ श्रीपतिः॥ ध्रुवञ्च१ धान्यञ्च२ जयञ्च३ नन्दः४ खरञ्च५ कान्तञ्च६ मनोरमञ्च
७ सुवक्त्रसंज्ञं८ खलु दुर्मुखाख्यं९ क्रूरं१० विपक्षं११ धनदं१२ क्षयञ्च१३॥२६४॥ आक्रन्द१४ संज्ञं विपुलाह्वयं च१५
स्यात्षोडशं तद्विजया१६भिधानम्॥ वास्त्वारम्भे नक्षत्राणि। यशोधरः। ध्रुवहरिमृदुपुष्यः स्वातिहस्तानुराधादितिवरुणधनि
ष्ठामूलभे सौम्यवारे। उपचयगृहसंस्थैः पापगैः केन्द्रकोणे१।४।७।१०।९।५। बुधगुरुभृगुपुत्रैर्वेश्मकार्य्यं प्रशस्तम्॥२६॥ ति
थ्यावरिक्ते शुभदे निशाकरे योगे शुभे लग्नगते स्थिरे भे॥ द्व्यङ्गे च ३।६।९।१२ कृतुः शुभदैर्विलग्ने पापग्रहैः संस्तु विवर्जिते गृहे॥
२६६॥ वैशाखे श्रावणे मार्गे फाल्गुने च विशेषतः॥ पत्नीपुत्रार्थलाभः स्याद्गृहकर्त्तुर्न संशयः॥२६७॥ कृष्णपक्षे शुभं तेषं शु
क्ले सर्वसमृद्धिः षष्ठ्यष्टमी वास्तुकार्ये निषिद्धाः परिकीर्तिताः२६८॥ कर्क४ नक्र१० हरि५ कुंभ११ गतेऽर्के पूर्वपश्चिममुखा
नि गृहाणि। तौलि७ मेष१ वृष२ वृश्चिक८ जाते दक्षिणोत्तरमुखानि च कृत्वा॥२६९॥ पूर्वपश्चान्मुखं गेहं न लग्नात्कर्मगे वि
धौ॥ सौम्ययाम्यमुखं गेहं न कुर्य्यात्सातालखेगते॥२७०॥ रवौ गृहस्थे वृहिणी शशांके धनं सिते देवगुरौ च सौख्यम्॥ वि
नाशमायाति बलेन हीने नीचस्थिते वास्तमुपागते च॥२७१॥ सूर्य्यभाद्गणयेद्वास्तुचक्रं च दिनभावधि॥ अम्ब्वद्रि७ शा१२
म्बरैः१० प्रोक्तमसत्सत्फलदं बुधैः॥२७२॥ कुजे वास्तोर्मध्यदेशेऽर्थहानिस्त्वीशनादौ पुष्टिरैश्वर्य्यवृद्धिः। नाग्नः सूनोः स्त्री
विनाशोऽस्ति स्वसम्पत्पीडा शत्रुतः स्याच्च सौख्यम्॥२७३॥ देवालये गेहविधौ जलाशये राहोर्मुखं शंभुदिशो विलोमतः॥

मीनार्कसिंहार्कमृगार्कतस्त्रिभेखातो मुखात्पृष्ठविदिक्शुभो भवेत्॥ २७४॥ ईशानवायव्यक्रमेण प्लवविचारः। पूर्वे प्लवो वृद्धिकरो धनदश्चोत्तरे प्लवः॥ याम्यां रोगप्रदो ज्ञेयो धनहा पश्चिमे प्लवः॥ २७५॥ नवभागं गृहं कृत्वा पंचभागं तु दक्षिणे॥ त्रिभागमुत्तरे कार्य्यं शेषं द्वारं प्रकीर्तितं॥ २७६॥ अथ प्रवेशः॥ ——— ॥ तत्र वसिष्ठः॥ अथ प्रवेशो नवसद्मनस्तु सौम्यायने जीवसिते वलाढ्ये॥ सिते च पक्षे शुभवासरे च वास्त्वर्चनं भूतबलिं विधाय॥ २७७॥ माघेऽर्थलाभः प्रथमः प्रवेशः पुत्रार्थलाभः खलु फाल्गुने च। चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे सुखपुत्रलाभः। ज्येष्ठे तु मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च॥ २७८॥ जीर्णगृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्ज्जयोः श्रावणकेऽपि सत्स्यात्॥ वेशोऽम्बुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणात्र॥ २७९॥ अथ प्रवेशनक्षत्राणि॥ हस्तः पुष्यपुनर्वसू शतभिषा स्वाती तथा रेवती रोहिण्युत्तरभंत्रयं हरिमृगो मूलं धनिष्ठा तथा॥ कन्याकुंभमृगालिसिंहमिथुनस्थर्क्षस्वराश्युद्गमे वा राजीवशनिज्ञसोमभृगुजा वेश्मप्रवेशे शुभाः॥ २८०॥ तत्र गुरुः॥ नन्दा भद्रा जया चैव पूर्णा च तिथयः शुभाः॥ अमावास्या च रिक्ता च वर्जनीयाः प्रयत्नतः॥ २८१॥ श्रीपतिः॥ त्रिकोण ९।५ केन्द्रगैः १।४।७।१० शुभैरकण्टक ६ काष्टमंत्यगैः ८ असद्भिः स्थिरोदयं गृहं विशेद्दले विधौ॥ २८२॥ अथ कुंभचक्रम्। रामः। वक्त्रे भूरविभात् प्रवेशसमये कुम्भेऽग्निदाहः कृताः ४ प्राच्यामुद्वसनं कृता ४ यमगता लाभः कृताः ४ पश्चिमे॥

| मुखे | पूर्वपार | दक्षि | पश्चिम | उत्तरा | गर्भ | गुद | कण्ठ |
|---|---|---|---|---|---|---|---|
| १ | ४ | ४ | ४ | ४ | ४ | ३ | ३ |
| दाहः | उद्वसनं | लाभं | श्रीः | कलिः | नाशः | स्थैर्य | सौख्यं |

श्रीर्वेदा४ कलिसत्तरे युगमिता गर्भे विनाशो गुरुर्दरामः स्थैर्यं मतः स्थिरत्वमनलाः कंठोभवत्सर्वदा॥२८३॥ इति श्रीलघुसं
ग्रहे लक्ष्मीनारायणकृते बालकप्रकरणम्॥ अथ जातकाध्यायः॥ लघुजातके। षष्ठेष्टमे वा चन्द्रः सद्योमरणाय पापसंदृ
ष्टः। अष्टाभिः शुभदृष्टो वर्षैर्मिश्रैस्तदर्द्धेन॥२८४॥ सुत५ मदन७ नवा९न्त्य१२ लग्न१ रन्ध्रे८ ष्वशुभयुतो मरणाय शीतरश्मिः
॥ भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिमित्रयुतोऽवलोकितो वा॥२८५॥ एकोपि पापोष्टमगः शत्रुगृहे पापवीक्षितो वर्षा
त्॥ मारयति नरं जातं सुधारसो येन पीतोपि॥२८६॥ लग्नाधिपजन्मपताष्टम८ रिःफ१२गैः प्रसवकाले। अस्तमितो
मरणकरो शशिप्रमितैर्वदेहूर्षम्॥२८७॥ जातकाभरणे॥ राहुर्भवेज्जन्मनि केन्द्रवर्ती क्रूरग्रहैः श्चापि निरीक्ष्यमाणः॥ भ
वंति वर्षैर्दशभिर्विनाशं वदंति वा षोडशकैश्च केचित्॥२८८॥ अथ शुभप्रयोगः॥ पक्षे सिते भवति जन्म यदि क्षपायां कु
छोतथाह नि शुभाशुभदृश्यमानः॥ तं चन्द्रमा रिपुविनाशगतोपि यत्नादापत्सु रक्षति पितेव शिशुन्नहन्ति॥२८९॥ एको
पि यदि केन्द्रस्थो भार्गवो ह्योगिरांपतिः॥ नवमे वा सुतस्थाने सर्वारिष्टं निवारयेत्॥२९०॥ लग्नाधिपो वा जीवो वा शुक्रो वा
यदि केन्द्रगः॥ तस्य पुरुषस्य दीर्घायुः संभवेद्राजपूजितः॥२९१॥ यदा वीक्षितो यामिनीशो दिनेशं बुधश्चापि शीतांशुसुदृ
सितश्च। तदा ज्योतिषाम्येन गण्ये न किं स्यात्स जातो भवेदीश्वरो दीर्घजीवी॥२९२॥ लघुजातके॥ रविवर्ज्यं द्वादशगैरनफाच
न्द्राद्द्वितीयगैः सुनफा॥ उभयस्थितैर्दुर्धराके केमद्रुमसंज्ञकश्चान्ये॥२९३॥ सच्छीलं विषयसुखान्वितं प्रभुख्यातिप्रकम
नफायां॥ सुनफायां धीधनकीर्तियुक्तमात्मजितैश्वर्यं करोति॥२९४॥ बहुभृत्यं कुटुम्बारंभोनिस्सम्मुद्विग्नमपि दुर्धराख्यो

ल॰ सं॰ भृत्सकं दुःखितमधनं यातं केमद्रुमे विद्यात्॥२९५॥ जातकाभरणे॥ तत्र डिंभाख्यचक्रविचारः। डिंभाख्यचक्रे रविभा

१६ च्चभानां त्रयं न्यसेन्मूर्ध्नि मुखे त्रयं च ३। द्वे स्कंधयोर्द्वे २ भुजयोर्द्वये च पाणिद्वये वक्षसि पंचभानि। नाभौ च लिंगे च तथै

कमेकं जान्वोर्भषट्कं परिकल्पनीयं। पादद्वये भं द्वितयं क्रमेण मुनिप्रवर्यैः फलमुक्तमत्र॥२९६॥ अल्पायुरस्त्ररणास्थि

तेच गमनं देशांतरं जानुभे गुह्ये स्यात्परदारलंपटः पत्नीभोच संतुष्टये। ऐश्वर्यं हृदि चौरकर्म्म करयोर्वीव्हावलं स्कंधयोर्द्वे

व्यं वक्रगते च दुष्टमशनं राज्यं शिरस्थोडुभिः॥२९७॥ कन्याजन्मनि डिंभचक्रं जपार्णवे। मस्तके त्रीणि ऋक्षाणि सप्तभानि



मुखे न्यसेत्। स्तनद्वये ४ ऋक्षाणि हृदये त्रीणि भानि च।२९८॥ नाभौ त्रीणि तथा गुह्ये त्रीणि

सूर्वे संतो न्यसेत्॥ कन्याजन्मनि डिंभाख्यं चक्रमुक्तं स्वयंभुवा॥२९९॥ शीर्षे संतापयुक्ता

स्यान्मुखे धान्यधनान्विता॥ स्तनद्वये स्वामिप्रेमवृद्धिः कामस्तथा पुनः॥३००॥ हृदि सौख्य

युता गुह्ये नारी स्याद्व्यभिचारिणी॥ असंतुष्टा स्वामिरता नाभौ स्याज्जन्मकालके॥३०१॥ अथ

दशा। त्रि ३ चतु ४ स्त्रि ३ चतु ४ श्चैव त्रि चतु ४ स्त्रि ३ चतुः क्रमात्। र च म बु श गु शु क्र कृत्तिका

दिदशां लिखेत्॥३०२॥ आदित्ये षड्वर्षाणि ६ सोमे पंचदशानि च १५॥ भौमे चाष्ट वर्षाणि

८ बुधे सप्तदशानि च १७। १९२ शनौ च दश वर्षाणि १० गुरोरेकोनविंशतिः १९ राहोर्द्वादश ए॰ म॰

वर्षाणि २० शुक्रस्याप्येकविंशतिः २१॥३०३॥ क्रूरग्रहदशायां च बहुशो जायते क्षतिः॥ शुभ १६

ग्रहदशांप्राप्यनराणांसुखमादिशेत् ॥ ३०४ ॥ लग्नाच्चतुर्थगः पापोयदिस्याद्बलवत्तरः ॥ तदामातृवधंकुर्यात्तत्केन्द्रेचापरोय
दि ॥ ३०५ ॥ द्वादशेरिपुभावेवायदापापग्रहोभवेत् ॥ तदामातृवधंकुर्याद्रिराशौस्थिरोयदि ॥ ३०६ ॥ इतिलघुसंग्रहेजा
तकप्रकरणं ॥ अथप्रश्नविचारः ॥ तत्रषट्पंचाशिकायाम् ॥ वृषसिंहवृश्चिकघटैर्दृष्टिस्थानंगमागमौनस्तः । नमृतंनचा
पिनष्टंनरोगशांतिर्नचाभिभवः ॥ ३०७ ॥ तद्विपरीतंतुचरैर्द्विशरीरैर्मिश्रितंफलंवाच्यं । लग्नेंद्वोर्वक्तव्यंशुभदृष्ट्याशोभनम
तोऽन्यत् ॥ ३०८ ॥ अथलाभप्रश्नः ॥ त्रि३पंच५लाभा११स्त७मयेषुसौम्यालाभप्रदानेष्टफलाश्चपापाः । तुलायकन्यासि
शुनोघरश्चनराशयस्तेशुभंवदंति ॥ ३०९ ॥ इन्दुर्द्विसप्तदशमायरिपुत्रिसंस्थः पश्येद्गुरुः शुभफलंप्रमदाकृतंस्यात् ॥
लग्नार्थधर्मासुतनैधनगाश्चपापाः कार्यार्थनाशभयदाः शुभदाः शुभाश्च ॥ ३१० ॥ भद्रासले ॥ पापैर्लग्नोपगतैः शरीरपी
डांविनिर्दिशेत्कलहम् ॥ सुखसंस्थैः सुखनाशंगृहभेदंबन्धुविग्रहंचवदेत् ॥ ३११ ॥ अस्तगमनविरोधः कर्मस्थैश्चान्या
विसेनाशश्च ॥ शुभदृष्टिसंयोगाल्लभस्यकृच्छ्राद्वदेत्सिद्धिम् ॥ ३१२ ॥ दूरगतस्यागमनंसुतधनसहजस्थितैर्ग्रहैर्लग्ना
त् ॥ सौम्यैर्नष्टप्राप्तिर्लब्धागमनंगुरुसिताभ्याम् ॥ ३१३ ॥ द्वितीयेकेन्द्रगताःऽश्यतियदास्वेदस्तदागमः ॥ आपिपास्तैर्ग्रहैर्दृ
ष्ट्वाब्रूयादितिप्रसंकितम् ॥ ३१४ ॥ पञ्चमेशोऽथलग्नेशोविषमर्क्षगतोयदा ॥ पुत्रजन्मप्रदौज्ञेयौकन्यानांसमराशिगौ ॥ ३१५
॥ सुताधिपोनृराशिस्थः पुंराशिस्थोविलग्नपः ॥ वीक्ष्यतः पुत्रदः प्रोक्तोयुग्मराशौचकन्यका ॥ ३१६ ॥ लग्नाद्विषमोप
गतः शनैश्चरः पुत्रजन्मदोभवति ॥ जीवरविलग्नचन्द्रमाद्विषमोपगतानरंकुर्युः ॥ ३१६ ॥ गार्भिणीनामसुक्तादिति

ल॰सं॰
१७

| | | | | |
|---|---|---|---|---|
| आ | ई | उ | ए | औ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| १।६।११ | २।७।१२ | ३।८।१३ | ४।९।१४ | ५।१०।१५ |
| नैके७ | पुन ५ | उत ५ | अ ५ | अ॰५ |
| मा।अग्न | क्रा।आ॰ | चैत्र॰ | ज्येष्ठ॰ | माघ |
| वै | श्रा | पौ | का | फा |

यिभिर्युनिभिर्युता॥ रामैर्भागे सुताद्वाभ्यां रूतन्मैकेन खेन वा॥ ३१७॥ दूतेनो
क्ताहि वर्णो खलु दशगुणिता राशिचक्रे विमिश्रा भूयो भूरेवदत्ता निकटजनयु
तास सप्तभागावशेषात् एके १ वन्हौ ३ शरे वा विषमपदयुते नास्ति लाभो नराणां
भून्ये वेदे ४ रसे ६ वा भवति च नियतं कार्य्यसिद्धिस्तु राजन्॥ ३१८॥ इति श्रीलघु
संग्रहे लक्ष्मीनारायणाकृते प्रश्नसूचनप्रकरणम्॥ अथ किंचित्स्वरशास्त्रोक्त
मुच्यते॥ कादिहान्तान् लिखेद्वर्णान् स्वराधो ङञणोज्झितान्॥ तिर्यक् पंक्तिः क्र
मेणैव पंचत्रिंशत्सु कोष्ठके॥ ३१९॥ नराणां मादितो वर्णो यस्मात् स्वरादधः स्थि
तः॥ स स्वरस्तस्य वर्णस्य वर्णस्वर इहोच्यते॥ ३२०॥ नभस्ये मार्गे वैशाखे अस्व
रस्योदयो भवेत्॥ आश्विनः श्रावणाषाढौ षिकारो नायकः स्मृतः॥ ३२१॥ उका
रश्चैत्र पौषस्यादेकारो ज्येष्ठ कार्तिके। ओकारस्तूदयं याति माघफाल्गुनमासयोः
॥ ३२२॥ किं विद्याभकरो बालः कुमारस्त्वर्द्धलाभदः॥ सर्वसिद्धिं युवा दत्ते वृद्धे हानिर्मृते मृतिः॥ ३२३॥ इति पंचस्वरचक्रम्॥ चं
द्रकालानलं चक्रं व्योमाकारं लिखेद्बुधः॥ चतुर्दिक्षु त्रिशूलानि मध्ये भिन्नानि कारयेत्॥ ३२४॥ मध्ये त्रिशूलपूर्वस्यां दिन रामः
कृत्साहि लिख्यते॥ त्रिशूले चव हि मध्ये व हि स्त्रिशूलके तथा॥ ३२५॥ नामऋक्षं संस्थितं यत्र ज्ञेयं तत्र शुभाशुभम्॥ त्रिशूले १७




अथचंद्रकालानलचक्रम्॥

स्वऋक्षाद्यच्चक्रमध्येतथैवच॥३२६॥त्रिशूलेचभवे
न्मृत्युर्मध्यमंवह्निराष्टकं॥लाभःक्षेमोजयःप्रज्ञाच
न्द्रगर्भेनसंशयः॥३२७॥वर्ज्जनीयंप्रयत्नेनप्रथमा
ष्टत्रिपंचकम्॥ऋक्षसंहाविंशकंचान्यकालरूपंनसंश
यः॥३२८॥लाभालाभंसुखंदुःखंजयंचैवप्रजायते
॥चंन्द्रकालानलंचक्रंज्ञानसंशयवर्जितम्॥३२९॥रो
गेचकुजनक्षत्राह्निनऋक्षान्वयुद्धके॥जयतोऋति
कर्क्षाद्धि सूर्य्यर्क्षादन्यतोबुधैः॥३३०॥इतिचंद्रकाला
नलचक्रम्।ऊर्ध्वगास्त्रित्रिशूलाग्रांस्त्रिस्त्रःतिर्य्यकुस्त्र




अथसूर्य्यकालानचक्रम्॥

संस्थिताः॥हेह्नेनाड्यो।स्थितेकोणेश्रृंगयुग्मंतथैवच॥३३१॥मध्यत्रिशूलदण्डाधोभानुभाद्यमण्डलम्॥सव्यमार्गेणदात
व्यं अष्टाविंशतिसंख्यया॥३३२॥नामऋक्षसंस्थितंयत्रज्ञेयंतत्रशुभाशुभम्॥अधोगतेस्थिनक्षत्रेरुद्धेगोवंधबंधनम्॥३३३
॥ऋक्षाष्टकेजयोलाभोऋक्षषट्केतथापुनः॥शृङ्गयुग्मेरुजाभंगोमस्तुःशूलत्रयेस्फुटं॥३३४॥यात्रायुद्धविवाहेषुरोगार्त्ते
व्यसनेतथा॥सूर्य्यकालानलंचक्रंज्ञातव्यंतुप्रयत्नतः॥३३५॥इतिसूर्य्यकालानलचक्रम्॥आर्द्रादिकंलिखेच्चक्रंमृगान्तं

| | | |
|---|---|---|
| आ | पू | पू |
| पु | म | श्ले |
| उ | ह | वि |
| अनु | वि | स्वा |
| ज्ये | मू | पू |
| ध | श | उ |
| श | पू | उ |
| भ | अ | रे |
| कृ | रो | म |

चन्त्रिनाडिकं॥ भुजंगसदृशाकारं मध्ये मूलप्रतिष्ठितं॥ ३३६॥ रवीन्दुनामनक्षत्रमेक
नाड्यां यदा भवेत्॥ तदा मृत्युर्न संदेहो रोगाद्वा पिरणो यथा॥ ३३७॥ इति त्रिनाडीचक्र
म्॥ मुखे हस्ते पाणौ चरणयुगले वक्षसि करे शिरो भागे नेत्रे नखगुदके नामराशिभा
त्॥ लिखेदेकं १ वेद ४ रस ६ शर ५ चतु ४ स्त्रि ३ द्वि २ युग २ लं रणे हानिः पूजा भ्रमधन
भयं भूसुखे मृतिः॥ ३३८॥ जन्माष्टकं द्वादशालूर्ध्वगोऽपि हृदि शीर्षे सव्येतरबाहुनेत्रे॥ त
दासुखं विघ्नकरं त्रिषष्ठो लाभेऽथवक्त्रांघ्रिभुजे गुदस्थे॥ ३३९॥ इति शनिचक्रम्॥ अथ
कोटचक्रम्॥ क्रूरा गर्भे पुरं घ्नन्ति प्राकारे खंडिकारकाः॥ बहिस्था वेष्टके सैन्ये भंगदाना
न संशयः॥ ३४०॥ क्रूरा गर्भे शुभा बाह्ये निश्चितं गृह्यते पुरम्॥ सौम्या मध्ये बहिः क्रूरा
असाध्यं दुर्गमुच्यते॥ ३४१॥ अथ कोटपालकविधिः॥ शुक्रः सौम्यो गुरुर्मन्दो राहवो इति शनिचक्रम्॥
भानुजः शितः॥ बुधेन्दुभास्करे सौरिः सौम्येति माधवामताः॥ ३४२॥ रविर्भौमः शितः सौम्यो गुरुः सौरिः शशिस्तमः॥ वर्गे
शाअङ्क वर्गादौ कोटपालाः प्रकीर्तिताः॥ कोटाधिपः कोटमध्ये कोटपालो बहिः स्थितः॥ तदा कोटभयं नास्ति विपरीता क्षु
हानिदाः॥ ३४३॥ बाह्यशत्रुप्रवेशार्थं संग्रामं यदि कारयेत्॥ तदा सिध्यति तं दुर्गं नान्यथा रुद्रभाषितम्॥ ३४४॥ पुरे भेनि रामः
गमे वक्रीकथं विक्रूरखेचराः॥ दुर्गमुक्ता तदा काले दुर्गस्थो न पलायते॥ ३४५॥ क्रूरे च स्तंभसंस्थेषु वक्रितेषु पलायते॥ १८

| | | |
|---|---|---|
| मुखे | १ | हानि |
| हस्ते | ४ | पूजा |
| चरणयोः | ६ | भ्रमण |
| हृदये | ५ | धनम् |
| करयोः | ४ | भयम् |
| शीर्षे | ३ | भूपाल |
| नेत्रे | २ | सुखम् |
| गुदे | २ | मृत्युः |




विहाय दुर्गं दुर्गेशः सन्देहो नात्र कारयेत्॥ ३४६॥ दुर्गनाम्नः स्वरो यस्य बालो वास्तमितो
पि वा॥ तद्दिने प्रारभेद्युद्धं दुर्गं सिध्यति नान्यथा॥ ३४७॥ पुरनक्षत्रादीशानकोणतो लि
खेत्। गणनापि कार्या॥ इति कोटचक्रम्॥ लिखेत्पूर्वतो वामतश्चैत्रमुख्याश्चतुर्दिक्षु स
व्येन यामानथाष्टौ। दिगष्टभ्रमन्मासतः सव्यतश्च पृष्ठे ऽथ दक्षे शुभोऽक्षेत्रपालो॥ ३४८॥
इति क्षेत्रपालभूमिः। दैवज्ञचिन्तामणौ॥ इन्द्रप्राणपमेशपाशिहुतभुक्सौम्यासुरे।
शुक्रमात्॥ यामार्द्धे दिवसे प्रयाति जयतो रक्षेच्च पृष्ठे तमः॥ ३४९॥ रात्रौ पश्चिमवन्हि
सौम्यनिरृतिः प्राग्वातयामेशके प्वीशाना घटिकाद्वयं पुनरसौ तुर्ये चतुर्थे दिशि॥ ३५०
इत्यर्द्धयामाः॥ प्राचीकुबेरशिखिराक्षसधर्मराजतोयाधिपानिलमहेशदिशि क्रमेण
यामार्द्धकैः प्रतिपदादितिथौ महेशी रक्षास्थिता शुभकरी खलु पृष्ठभागे॥ ३५१॥ इति श्री
लघुसंग्रहे लक्ष्मीनारायणकृते चक्रप्रकरणं समाप्तम्॥ चतुराशि चतुःकोणं नराकारं लि
खेद्बुधः॥ रविभाज्जन्मभं लेख्यमीशानादौ च सव्यतः॥ ३५२॥ शत्रुशीर्षे पलायंते शत्रुः
कर्णयोर्जाग्रतः॥ दक्षिणे हस्ते च पादे च शत्रुः शत्रोपसर्पति वामपादे च हस्ते च निश्चितं धार्यते रिपुः॥ ३५३॥ दुर्गे न स्व
मारभ्य सूर्यो भवति पंचमः॥ अथ वाहादशे ऋक्षे तथाप्येकोनविंशतिः॥ ३५४॥ षड्विंशे वा यमनक्षत्रे प्रभंगो विनिर्दि

| | | |
|---|---|---|
| ई<br>३०।८ | पू<br>१।९ | अ<br>३।११ |
| उ<br>१०।२ | | द<br>१३।६ |
| वा<br>१५।७ | प<br>६।१४ | नै<br>४।१३ |

चै० ग्र० अग्न०
पू०
पं० ८
चै० ३
भा० ७
यो०
सेत्रपा
लीभूमी
अ०
आषा० २
कार्ति०
द० फा
नै० ४
ज्येष्ठः
मा० आश्विन०

| | | |
|---|---|---|
| ई<br>२४ | पू<br>१<br>२ | अ०<br>२६ |
| उ<br>७<br>२ | द्विवाअ<br>र्धयाम<br>राहुः | द<br>३<br>२ |
| वा<br>२<br>१ | प<br>५<br>२ | नै<br>२ |

धनहारविवेधःस्यात्त्वा
भौमकेतयोः॥३५५॥पुरहा
शनिवेधःस्यात्राहुश्चंद्रस्त
थास्त्रिया॥सप्तदशागःपुर
स्योद्यादितिभास्करः॥३५६॥
पुरस्यपुरनाथस्यनवमेभा
स्करेपिच५।१२।१७।१९धन
हा११वलहा१२पुरहा१९पुर
स्यहा२६स्त्रिहा२६धनहा
वलहाचैवपुरहापुरपहास्त्रिहा। अश्विन्याद्यंलिखेच्चक्रं सप्तविंशतितारकं त्रिकोणंनवभिर्वेधः कर्तव्यातिर्य्यगाकृतिः।
अश्विनीरेवतीवेधोवेधश्चाश्विनिज्येष्ठयोः मघापौषेमघाश्लेषेश्लेषामूलयोस्तथा। एवंसंघट्टचक्रेणकार्याक्रूरसगताग्र
हाःभूपनामर्क्षसंघट्टेयुद्धंभवतिनान्यथा॥३५७॥निर्वेधसौम्यवेधेचयुद्धंनास्तिनरेंद्रयोः क्रूरवेधेभवेद्युद्धंतत्कालेघो
ररूपिणं॥३५८॥युद्धकांभवेद्राजापुष्पभंक्रूरवेधितं।युद्धदेषीभवेत्सौम्यंतथावेधविवर्जितं॥३५९॥सौम्यक्रूरविभा




गेनमित्रामित्रक्रमेण च।
वक्रातिचारगत्या च पुर्लं
स्वल्पं चनास्ति च॥ १६०॥
इति संघट्टचक्रं। प्रधा
नात्तं चनगांक सूर्य वे
त्तुषड्विंशमितानि भानि॥ शे
ते मही नैव ग्रहं विधेयं
गवापीखननं प्रशस्तं॥ १६१

अंधकं तरत्तु मंदलोचनं मध्यलोचनमतः सुलोचनं रोहिणी प्रभृतिभं चतुर्विधं नूनमत्र गणयेत्पुनः पुनः॥ १६२॥ लाभो धके निक
एव हृतस्य चौरैर्द्रव्यस्य लब्धिरिह मंदकभेमलात् । हरेश्रुतिस्त्रिपीटिभेन च तद्दनाप्नोति ना॥ १६३॥ इति श्रीलक्ष्मीनारायकृते लघुसंग्रह
समाप्तः॥ ॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः॥ काशिसंस्कृतमुद्रायामंकितो यं शिलाक्षरैः॥ १॥ श्रीकाशीजीमें मले
हौरकटोरा श्रीबाबूवाराणसीप्रसादजीके मकानमें काशीसंस्कृतमुद्रायंत्रमें छपी जिनको लेना होय उनको उक्त स्थानमें श्री
पुत बाबू वाराणसीप्रसादजीके पास या कचौरीगलीमें भाई प्रतापसिंह जीके दुकान पर मिलेगी संवत् १९४१ ॥ ॥

